K.R. Chakradhar Sharma Vaidya

मीमांसा साध्य ग्रन्थ

॥ गौत्तमी ॥

# तत्त्व सुधालहरी

अर्थात्

(न्यायदर्शनस्य संक्षिप्ता श्लोकैर्व्याख्या)

व्याकरणतीर्थ पं० हरिदत्तशर्मत्रिवेदि विरचिता ।

—:※:—

## Tatua Sudha Lahari

By

P. Hari Datta Sharma, Trivedi
Vyakarantirtha

***

लवपुरे

पञ्जाब प्रिन्टिङ्ग वर्क्साख्य मुद्रालये पं० चरणदासा-
धिकारेण संमुद्राप्य प्रकाशिता।

प्रथमसंस्करणम् १००० ]    [ सं० १९६९ मार्ग० १०

60

श्रीशिमारीप्सितार्थं प्रभुतरपादाब्जं नमामि ।

कुतर्क मति कर्दन प्रखर शोष भूता नलः अशेष भव-

दोष हान मति कोषवेशो मलः ।

मुमुक्षु वृन्दभुक्षण प्रति फलान्नाविलः परोपकृति

वागगातिर्जयति गौतमो मांसलः । १

न हिन विदित चरमेतदत्र भवतां दर्शन गहन सार

तर विकर्षण समुल्लसित रसान्तांगताना मार्य

मिश्राणां यदाधुनिक सकल कललमत भेद खेदाय एक

एव जागर्ति कुतर्क कर्कश विमर्श वंश वनदावानलस्त

र्कः तदीय समस्त नव्यतरग्रन्थि ग्रन्थनपटीयसी शक्ति

श्चसर्वा महर्षि गणपूज्यपादसादरप्रशस्त पादनाम्नागौ

त्तमेन प्रणीते मूल भूतन्याय दर्शन एव पूर्णतर निर्भरा

तस्यच चिरकाल विशीर्णे पठन पाठन परिपा टीकतया मुनि गहन मातितातिविलासस्य विगीत गुण मानुषैर्ज्ञातुमपिदुष्कर तयाच नावाप्यते विशद पार दोरसः तदिदमा लोच्येयं गौत्तमी तत्व सुधा लहरी व्यधायि रस मात्रा स्वाद नकृते सकल भाष्य सूत्र सारा निर्मास्यतेच

तामुद्दिश्य कणश स्त दर्थ प्रदर्शन विस्तारित भाष्यार्था समूलाकणिका नाम्नापि परपरिचय प्रचय तूला विवृतिस्साहाय्येन तत्रभवता मार्यामि श्राणाम्

इयंपुनः परीत्ता दित्सूनां पठित भाष्यतोपिस-म्यतकृतयामनः स्पृहयार्थं गृहीतुमशक्तानां चोपक रिष्यतीतिपृथगेवार्यमिश्राणा माज्ञा मभिकाङ्क्षमाणे न प्रकाश्यते विशेष भूमिकावेश प्रबन्ध वनितापिक-णिका प्रकाश एव रणिता अस्याश्चा प्रकाशनादि

प्रबन्ध स्समर्व एव स्वस्य सन्ध्या पाठनादि नित्यकर्मं व्या-
कुलित तया स्वयमध्यापित सकल दर्शना लङ्करण पदवी
योग्यता कस्यमतोऽधीत सकल ग्रन्थस्यशास्त्रिपदं
प्रभाकराख्य स्वजाति पदंच योग्यतयाऽपिशास्त्रि
प्रभाक रत्वेन दधानस्य श्री मदु पेन्द्रनाथ शर्मणः स्वायत्ती
कृत मिति ॥

सभग्रमहिलामहीं रचित गौर सारां निजां
विलोक्य यशसो विधुं दश दिशा रवेडिरिडमम गते—

जलधि मभ्रशङ्कन नव प्रतापःस्वयम् जगत्य नुग
गतार्थ नामरसभास्करो राजते ॥ दानस्त्वत्कर तया-
गण नाथ बुद्धयामान प्रभा भरतयाकविभिः परेशः यः
कीर्त्यते शम दयालुतया जलेशः जीयात्सराज शिरसा
मभिवन्द्यएषः ॥ यस्य धर्मार्थदानेनचतुर्वर्गं प्रसाधयन
अध्यापकोस्मिशालाया रघुनाथस्यमन्दिरे ॥

———

# अथ तर्कण भूमिका ।

निरूह प्रत्यूह समूह सम्पदो विक्षेप संक्षेप विधौ पटीयसा । शयेन भक्तापदपां पिबेनवा कुर्वाणमीशं प्रणुमोगणा ग्रणीम् ॥ १ ॥

माना मते विनाता वसतानन्ते मतेर्माता । समिति निरस्त विपत्तो दिनं दिनं मेहरिर्नम्यः ॥२॥

प्रबन्धबन्धप्रतिबन्धभासा निजोजनस्तत्व सुधाल हर्याः व्यापारितस्तर्कणभूमिकायामालोचेत मुद्रण एष किञ्चित् ॥३॥

विदित पूर्व मेतदत्र भवतां विद्यावारिधि पारावरी णधीर धुरीणानां दर्शन शैलीपारिशीलन शीलानां विबुध गोष्टीगरिष्ठानां विपश्चिताम् यदेहिका मुष्मिक सम्प त्प्राति पत्ति पित्तदग्ध मुग्ध मनसाम् अदृष्ट कृष्टनष्टा दृष्ट द्रष्टव्य रोचकानामात्यन्तिक दुःख खिन्नमनसा मात्न-

नि जनानां शरीरमसा वित्यादि विविधाः संशीतयः तद-पनीतये भगवान्बादरायणिः ( अयमात्मा ब्रह्म ) आनन्दं ब्रह्म ( ब्रह्मवेद ब्रह्मैव भवति ) इत्यादि श्रुत्या ब्रह्मवे दिन एवात्यन्तिक दुःखाविन्नतया उपनिषद्दृढो पोद्वलकाद्वेदान्त शास्त्रादेव निश्रेयस मित्यभि दधदभि दधौ चतुर्थ पुरुषार्थ मर्थिभ्यो मर्त्येभ्यः शास्त्रम् तथा अजामेका मित्यादिश्रुत्या प्रकृति पुरुषा विवेक विवेक निवन्धनैव भवाभव सोपान परम्पराधिरोहणेति चिज्ज डग्रन्थिविमोकाया साधारणीं स्वशास्त्र प्रवृत्ति प्रदर्श यन्निवसांख्यमाख्यातवानादिमहर्षिः श्रीकपिलदेवः । तथा पर शरीरावेशादि सिद्धि सम्पदा प्रलोभयन्निव ईश्वरानुग्रह समधिगत समाधि मवलम्ब्य पूर्वोक्त सिद्धि सम्पदा पुरुष साक्षात्कार प्रत्यनीकतया मुमुक्षुभिर नादर णीयतां सूत्रयन्ना विवेकख्यातेः परीशीलनीयोऽसम्प्र ज्ञातोयोग इति शिक्षयन् शिष्यान् पुरुषार्थ विहीनानां दग्धवीजस्येव प्रति प्रसवः स्वरूपा धिष्ठानं च चिति शक्तेः

कैवल्यं सूत्रयामास भगवान् पतञ्जलिः ।

तथाऽपौरुषेय वैदिक कर्म्मानुष्ठानेनो पार्जिता ऽपूर्व संस्कारेण चिरस्य निरस्य दुःखखातपातान् यन्नदुःखेनसम्भिन्नंनचग्रस्तमनन्तरम् । अभिलाषो पनीतंच तत्सुखंस्वः पदास्पदम् इत्यभि युक्तोक्त लक्षणं सौवर्ग सुखमनुबुभूषन्तो विधिबोधितयागेनेष्टं भावयन्तु यज्वान इत्युद्घोषयता प्राणायि महर्षि जैमिनिना द्वादश लक्षणी मीमांसा ॥

तथैवद्रव्यादि सप्तपदार्थसाधर्म्य वैधर्म्य तत्त्वसम्बिदा ऽत्यर्थ गहनमपि मुक्तिवर्त्म सुकरयानमित्युप दिशन् व्यधाद्वैशेषिकं श्रीमान् कणादः । ततः

मुमुक्षूणा मात्ममुखप्रेक्ष्य तत्त्वचिख्यापयिषया प्रणिनाय भगवान् गौत्तमः सूत्राणि एवंचात्यन्ति कदुःखा पनिनीषवो मुनिषट्कोपादिष्ट मुक्ति पथमनुसरन्तु परः सहस्रामुमुक्षवः । ननु एतेषांपरस्पर विरोधाद्विप्रतिपत्ति

विपत्तिव्याकुलतया न स्यात्तादृशस्य कस्यापि तत्र प्रवृत्तिर्विरुद्ध दर्शन बाध्यमानत्वात् स्वविषय बाधस्य अबाधितस्यैवतस्य प्रवृत्ति प्रयोजकत्वात् इति ।

तत्रब्रूमः भेदोहि विरोधनियामकः, सचकिं प्रस्थान निबन्धनः, आहोस्वित् प्रतिपाद्य प्रयुक्तः, किंवा वचन कृतः उतस्वरूपतः, नतावदाद्यः तादृशभेदस्य विरोधनिया मकत्वाभावात् क चित्तथात्वेऽपि इह तथाभावात्, प्रति पाद्यभेदे तत्पर्यवसानाच्च ।

नापि द्वितीयः, आत्यन्तिकदुःखापनायकत्वस्य सर्वत्रा विशिष्टत्वात्, अवान्तर प्रतिपाद्यस्य भिन्नत्वेऽपि अन्ततोगत्या ऐक्ये तथाऽनङ्गीकारात् दृष्टो हि व्रीहि भिर्यजेत यवैर्वेत्यत्र स्वरूपतः पूर्वतयो भेदेऽपि अन्ते- प्रयाना पूर्वनिष्पादकतया तादृश भेदाभावः ।

नापितृतीयः तादृश भेदस्यालङ्करणमात्राव भासतया- ऽदोषा वहत्वात् । वास्तविकस्यैव तथात्वेङ्गीकृतत्वात् ।

अन्तिमोऽपिस्वाभाविकउत अन्यः नतावदाद्मिः प्रमाणाभावः भवति हि प्रामाणिक एव तथा नान्तिमोऽनुपलब्धेः नच तदनुपलब्धेरनुपलब्धेर नुपलब्धिर नुपपन्नेति वाच्यम वस्तु विरहेऽनुपलब्धेरेव हेतोर्घटेदीपस्येवापेक्षणीयतया दीपेदीपान्तरस्येवा न्यस्यागवेषणात । तस्याः स्वय मनुपलम्भ स्वरूपत्वाच्च एकैकानुपलब्धि बृद्धया पक्षप्रतिपक्षसाधनेऽनवस्था वास्थितिः । इतरथा तृतीयाऽनु पलब्ध्या मयाऽपिस्वकीय पक्ष साधनं सुकरं स्यात । तथैववाङ्गी करणे मतानुग्रहेण भङ्गस्याङ्गी कर्तव्यतास्यात्त व तस्मान्नकश्चि देषविरोधः । अपितु विरोधानियामक एवात्र कश्चिद्भेदः ।

सचाधिकारिभेदप्रयुक्त मुक्ति मार्गभेदः शास्त्र भेद प्रत्यायकः युक्तं चैतत यंपथोपसन्नंयादृश मधि कारिण मवाप्नुवन्महर्षयः, तं तथैवततकृते शास्त्रं निर्माय शिक्षित वन्तः । तथाच श्रुतिः (समित्पाणिः श्रोत्रियंब्रह्मनिष्ठमिति तत्र (योवेदनिहितं गुहायां परमेव्योमन) इत्यादि श्रुत्या

अवगतत्वा दन्नमयादि कोशपञ्चक रूप गुहाहितत्वेन ब्रह्म तत्वस्य पञ्चमकोश विवृत्या निर्णेष्यन्तः प्रत्यगात्म परमात्मयाथात्म्यं मन्तव्यंमतामहर्षयः ।

न च नास्तिकदर्शन जातस्यापि कोश चतुष्टय विवरकतया तथात्व मस्त्विवतिवाच्यम् तद्विवरणमात्रस्य तदनियामकत्वात । ब्रह्माणिपर्यवासितत्वस्यैवास्तिकोपा देयतायां हेतुत्वात आस्तिक शरण सरणि परिपन्थित्वाच्च तत्रापि ब्रह्मणि पारमार्थिक सत्वं सर्वतो दर्शयतः ।

अस्यैवाद्वैवादस्य मपञ्च भ्रान्ति पतितानामपि तामसह मानानामगाध भव जलधौनिमज्जत्तामुद्धरिष्णुभिर्भक्ति तारणी भिस्तरणिभिर्वचोभिरवेदि वैष्णावाचार्यवर्यैद्वैतद्वैता द्वैत विशिष्टाद्वैत शुद्धाद्वैत मत चतुष्टयमधिकारि भेदादेव ॥

तत्र प्रत्यत्त भ्रम मुग्ध हृदयानामुपदेशकृते जीव भेद एवावास्थाऽपि मध्वाचार्यैर्हरि प्रसत्तये भक्ति संपत्तये

च मुक्ति योग्य भक्ति पाके द्वैतेलोभयद्भिरि वनिम्बार्कैश्चो पदिष्टं द्वैताद्वैतमेव द्वैत निष्ठस्यापि भक्त्यान्तेद्वैत मत्रैवा द्वैतश्रुतीनांवर्णयद्भिश्चाशय माश्रितंरामानुजाचा र्यवर्यै र्वि शिष्टेन चिज्जडसंघातेन लीला सम्पादितेन तदात्मक शरीरेण विशिष्टस्य हरे रद्वैतम् उत्तमस्यापिचा द्वैत निष्ठस्य ब्रह्मश्रुतीनां नित्यत्व ब्रह्ममात्रेपर्यवसानमेव दर्शय द्भिश्चवल्लभैश्शक्ति शक्ति मतोर भेद माश्रयद्भि र्लीला कल्पित शरीरात्मा हरिरेव जग ज्जगदेव हरिर्हरि तो जगतो न हि भिन्नतनुरितीद मेव पद्यमु पदिष्टं शुद्धा द्वैत मुपदिशद्भिः ॥

अस्मद्गु रुभिरपि हरिभिः संसार ब्रह्म ज्ञान मेवो पदिशद्भिश्च वयं नियुक्ता एत मेव मत मन्तिमम्मतं विधातु एन मेव मात्र मतां निवेशे भाविनी वोनिष्ठेति हितेषामाशयः ॥

व्याव हारिक सत्त्वत्तया जगन्मिथ्यात्वमा पाद-

यतोऽन्तिम कोश विवेक फलितार्थ मुख्य फलकतया सर्वत औत्कृष्टयं वेदान्त के सारिणः ।

पञ्चम कोश बिवरकत्वेनतदधिकारि सम्पादक तया वाचाट मोटन पटुतया तादृशाधि कारि महत्व महिम्नायुक्त्यै को पोद्बल कतया साभायि की आन्वीत्तिकी विद्या च सर्वतोऽग्रेसरत्वेन वरी वार्त्ततराम्

इतीव विमृशता मुमुक्षु जनानु जिघ्रत्तुणास विस्तर मभाषि भाष्यं महर्षिणा वात्स्यायनेन । तत्रापि क्वचित्क्वचित सूत्र भाष्य वार्त्तिकानां परस्पर विरोध वाधा वाधते बुधः । यथा समाना नेकेति ।१ । १ । २५ । सूत्र भाष्या त्पञ्चधा संशय इति प्रतीयते न्याय वार्तिका च्चात्रिधेती । तथा धारण कर्षणो पपते श्चेति ।२ । १ । ३५ । सूत्रात्साधनमवयविनः, भाष्या च्चनिरा कृतिः स्थापनं च न्याय वार्त्तिकात, प्रतीयते इति तत्राविप्रति पन्नशेमुशीकानां संशय विच्छितये नाद्यावधि निरणायि

केनचिदापि संशयः, अत्र यावि विषयक मूत्रेत्रा, एव मन्यत्रापि विरोध वाधामपनयन्तोऽध्यारोपा पवादन्या येनाऽत्मतत्त्वमुपदिशन्तः शिष्यान् अनुचिकम्प यिषयाऽधीति नांन्याये मनांसिरञ्जनायच धोरधौरेयाणामरीर चन्मदभ्यर्थिताः( ५७५ ) कारिकात्मिकां गौतमी तत्व सुधालहरिकां व्याकरण तीर्थत्रि वेदि प्रभृति कतिपयोपनाम सुमनः सुपूजिताः श्री मद्धारिदत्त शर्म पूज्यपादाः प्रथममेभिः श्रीमद्गिरि धारिलाल पूज्यतात पादेभ्योऽधीता बहवः शास्त्र ग्रन्थाः, ततः श्रीमतपण्डित हेमराज पूज्य पादेभ्यः पर्यचिन्व न्न्याय शास्त्रम् । यैर्यशो विधु विधुत तैर्थिक प्रत्यर्थितिभिरैः प्राचीन नवीन न्याय प्रबन्धान ध्याप यद्भिरन्ते वासिनोऽद्यापि सन्तराम पुस्तकालयेऽमृत सरासिविजेगीयते ततः प्रत्यहं नवया निज निर्मित पद्या वालि वितरणनया पर्यतूतुषन्महे शानम् तद्यथा ।

ध्यायं ध्यायं भवपद युगंन्य स्यप्राण प्रवाहं

कर्णौदत्वा तवपदरजः कीर्तिर्गीते विगाहम धन्या द्वैतं-जहति विषयाशां विहाया थतेषां ब्रह्मानन्दः प्रभवतितमां स्त्वत्प्रसाद प्रमोदः१ लोकेयावा सरसनिचुला भारती मालतीवा त्वत्पूजायां कृत सुमपदार्यैः कृता सारातिर्वा गायद्भिस्तेजलजमकरन्दं यथाषट्पदैस्ते पादावासा ह्र्दीह नितरांत्व त्प्रसादप्रमोदाः । २ ।

भावो भावो हृदय निहितः सर्वभावा हितत्वात सर्वेभावा भवइतिपदैनैवसङ्कीर्त्यमानाः ॥ अष्टात्म त्वादपि चरसमा त्रत्ववेद प्रसिद्धेःकाव्यंवा स्यान्नन मुखगतं शङ्करंनाम वास्यात । ३ ।

काचिल्लेखां चान्द्रीं मृतिदमम् तंचापिगरलं वहन्ने वाभित्वं विषमनयनो नायक तया । नवाभाति प्रत्ना गिरिश विषमाणां समतया धृतेर्वा नेंत्राणां गदितिरस-मानां शिखरिणी ४

यादि जन दोष विशषं स्ववेश विरोध भिव ना

बलोक यासि । शरणा गत वत्सलतां कुरुशङ्कर शङ्कर-
त्वातु । ५

गिरिश शिरासि विभ्रद्दीन्वितो हैमवत्या सुरस-
रितम मेयंसैर्ष्यम स्यापनेतुम । दुरितमिवसमानं सानु-
कूल्यं विनम्रोहर वितरहरौ स्वांहारिर्णी प्रीतिमत्र । ६

एवंविधैः स्तुवन्तः पद्यैर्महेशानमवापुस्तदनु कम्पया
महद्यशः यथा ।

असावसा धारण धारणाधरो मुदान्वी शनव्यगा
-हि दिग्दि शाम । समंयदीये सितभूति कैतवात ध्रुवंय
शोन्यासि समस्त मस्तके । १

प्रदाय तत्काल मनल्य जाल्पिने निग्राहमोहं हियशो
हरन्त्य मविर्णावलीका समकाभवत्स्त्राति नोदेतिका
देवकुतेऽनुयोजना ।

धृातिनाम्नोऽपरस्यास्मिन् वाचस्पाति रितिप्रभौ ।

सर्वतन्त्र स्वतन्त्रत्वा देवाप्नोत्यौ चितिंगिराम २

हरणा द्रव्या कृति तीर्थो महा त्म्यादार्थनोऽप्यमतेः ।
ईश्वसा पूर्तं र्भूर्तिर्याप्याप्यैस्या पराहरेर्नाम्नः ४

एवमेमिश्रोमेशा राधनेन द्विदश वर्ष वयसि सम-वाप्त लोकोत्तर चमत्कारै रात्मीयेऽपिवेश्मनि स्वतन्त्रमभ्या पिताश्चिरंभूया नन्ते वासिगणः,

ततश्चाऽनुपम प्रेम्णो पहारेण श्रीमान् महाराज साहिब बाहादुर मेजर जनरल हिज़ हाईनस इन्द्र महेन्द्र बहादुर सिपर सल्तनत जी. सी. एस. आई. इत्यादि विशेषण विशिष्टजम्मू कश्मीराद्यने कदेशाधीश श्री १.८ प्रताप सिंह प्रभु वराणाम् । तदवाप्तजीवकाः श्री रघु-नाथ पाठशालायाम् ध्याप्यध्यापयन्ति समस्त शास्त्र मधि जिगांसून् विद्यार्थिनः पाठाशाला पाठनव्यापृत-धीभिरपितद् वशिष्ठ दिष्टे ग्रन्थिताःकातिपये ग्रन्थाः । तानपि । परिचिन्वन्तु हितैषिणो निर्मत्सरा विद्वांसः । यथा १०० शतपद्यात्मकः शोक ग्रन्थः । काव्य दोषमी

मांसा, अलङ्करण ग्रन्थः सचास्ते जम्बूपुरे मुद्रा प्यमाणः अचिरणैव श्रीमतसमत्त मेष्यतितथा अद्वैतसि द्धितत्वा मृतो वेदान्त ग्रन्थः लीलाञ्जनं च व्याकरण ग्रन्थः तत्व सुधाल हर्याव्याख्यानभूतः काणिका निवन्धः । एतेषाम् द्यावधि प्रकाशाभावः साहाय्य विरह निवन्धनः अस्यचनि दर्शन पूर्व मेवानुपद द्रष्टव्यम, सप्तशत्याग्राहकपत्रा णामङ्किष्यते । एतस्पभूमिका यात्र संक्षिप्य निरूपित विषयं सविस्तरं दर्शयितास्मः नैसर्गिकमति विभ्रमेणात्त स्योजक दोषण दृष्टिदोषेण वा कतिपयानि क्षाम्यन्तु स्खलितानि विपश्चितः सफलयन्तु च प्रबन्धमेतं नयन्तो नयनपथं परिश्रमं गुणैक दृशोदर्शन रसिकाः २१ प्रसीदतुचाने न महीपसा महसा भगवान गोप रमणी रमणः

आशासेचायं सम्पत्स्यते सत्कृतादर भूमिर्ग्रन्थः तथैव सूक्तं भामत्यां वाचस्पति ।

नाभ्यर्थ्या इहसन्तः स्वयं प्रवृत्ता नचेतरे शक्याः
मत्सरपित्त निबन्धनम चिकित्स्य मरोचकंयेषाम्

इति उपेन्द्र नाथ शर्म्मा,

शास्त्री प्रभाकर गुरुप्रसादलब्ध दर्शनालं करणपद्वीकः



ओम् ।

सू०—प्रमाण प्रमेयसंशय प्रयोजनदृष्टान्त सिद्धान्ताव-यवतर्क निर्णयवादजल्प वितण्डाहेत्वाभासच्छल जाति निग्रह स्थानानां तत्वज्ञानान्निःश्रेयसाधिगमः । १ ।

त०—जयति निजविलोके यत्नशीलोऽनुशीलः सकल भुवनकीलोलीलया विश्वनीलः । दवितनिजनिरी-त्तावातिकाभ्रान्तितूलोरसभराचितिरूपः शम्भुविम्बात्म-भूतः । १ ।

आनन्दमन्दिर मरिन्दमकन्दवन्द्यमन्दारमन्दिरसुमारुत-सन्मिलिन्दम् । विघ्नैकमूलमपि भेतुमिवैकदन्तं नौमीशकूल मन्त्रवुद्धि महाताटिन्याः । २ ।

आत्मा श्रुतौमतौध्याने विभाव्यः श्रुतिषुश्रुतः । कणा-देन पदार्थेषु युक्त्यासौ प्रतिपादितः । ३ ।

मतिंतस्य प्रमाणेनमिथ्याज्ञाननिवर्हणाम् । चिकीर्षु-र्गौतमस्सूत्राण्ययुक्तवान्मन्दवुद्धये । ४ । तेषांभाष्यार्थ-

गूढेन संक्षिप्तवचसा मया क्रियते गौतमीतत्व सुधालहरिका- मुदे । ५ । मेयमिथ्या भिमानेन हेयदुःख मरत्यतो हान- हेतुर्जिहासार्थं मेयं मानैर्विविच्यते । ६ । मानंमेयंमितिर्माता सर्वाण्यर्थाश्रितानिमे । प्रवृत्ति हेतुकप्राप्तेर्नशून्यंसकलं जगत् । ६ ।

तदर्थसुखदुःखेच हेयोपादेयबुद्धितः । प्राणिभेदादसंख्येये तत्वतः सदसद्द्वयम् । ७ ।

असतो मानवेद्यत्वं प्रतियोगि प्रसंगतः । उपलब्धि प्रसङ्गेनभाववत्समुदीर्य्यते । ८ ।

प्रमाणं मेयसन्देहौ प्रयोजनमतो भवेत् । दृष्टान्तश्चापि सिद्धान्तोऽवयवास्तर्कणमेवच । ९ ।

निर्णयोवाद जल्पौ च वितण्डादुष्टहेतवः । छलंजाति- र्निग्रहश्चपदार्थाः षोडशैवतु । १० ।

निःश्रेयसायमुनिना संशयादिपरीक्षया । मानेनमेयसि- द्ध्यर्थ मुक्ताहानस्यासिद्धये । ११ ।

फलंमेयंचसर्वमे फलार्थ मेयकल्पना । मानेनसाधनायासौ प्रस्थानेनभेद आश्रितः । १२ ।

विमृश्यनिर्णयोन्यायैः कार्यस्तेनैषकीर्तितः । पृथक् कृत्य फलायैव प्रयोजन निरूपणम् । १३ ।

वितण्डापि फलायैवज्ञानादेश्चप्रवृत्तितः । परन्तु स्थापना हीनाकिमुवादो न सम्भवेत । १४ ।

दृष्टान्तः पक्षसिद्ध्यर्थं विरोधात्खण्डनाय च सिद्धान्तो न्यायमूलंचावयवास्तस्य साधकाः । १५ ।

निर्णयस्तैः प्रसिद्धिश्च तर्कमालम्ब्य जायते । वादैर्जल्पवितण्डाभ्यां तत्वरक्षाप्रसिद्ध्यति । १६ ।

हेत्वाभासाश्छलंजातिर्निग्रहस्थान मेवच । उपकारितयास्यपरीष्टयैन्याय प्रास्थिता । १७ ।

एवंमानैर्मेयासिद्धिर्मननन्त्वात्मनः कृतम् । उद्देशलक्षणान्येषांपरीक्षारमानमेयगा । १८ ।

आत्माशरीरमित्यादि मिथ्याज्ञानेनदूषितः । त्रिधा

प्रवृत्तितो जातोदुःखमाप्नोति मानवः । १.९ ।

सू०—दुःख जन्म प्रवृत्तिदोषमिथ्या ज्ञानानामुत्तरोत्तरा पाये तदनन्तरा भावाद् पवर्गः । २ ।

त०—दुःख जन्म प्रवृत्तिश्च मिथ्याज्ञानमितीरिताः । उत्तरोत्तर सम्पाद्यास्तद्धानाद्धानमाप्नुयुः । २० ।

ततोऽपवर्गोऽनुष्ठानान्न शास्त्रपठनोतरम् । जीवन्मुक्ता मुनीन्द्रा स्तेतेनदैशिकतांगताः । २१ ।

सू०—प्रत्यक्षानुमानोपमान शब्दाःप्रमाणानि । ३ ।

त०—उद्देशस्तु विभागःस्याल्लक्षतस्येतरस्यच । द्विधासतत्र पूर्व्वोग्रे प्रमाणेष्वान्तिमोमतः । २२ ।

संज्ञाशब्दैर्यतः सर्वेविभाज्यास्तच्चलक्षणम् । प्रत्यक्षमनुमानंचोपमानं शब्द एवच । २३ ।

सू०—इन्द्रियार्थसन्निकर्षोत्पन्नंज्ञानमव्यप देश्यमव्यभिचारिव्यंवसायात्मकं प्रत्यक्षम् । ४ ।

त०—चतुर्धामान मिष्टंस्याज्ज्ञानं वृत्तिश्चतद्भवेत् ।

इन्द्रियार्थ युजाजातं प्रत्यक्षंतच्चकीर्तितम् । २४ ।

अनादेश्य मिदंशाब्दं तत्सङ्के तेनवोध्यते । व्यपदेश्यंच तद्बुद्धेयाऽवाधितं निश्चयात्मकम् । २५ ।

संशयोऽपीन्द्रियाधीनोनचायं निश्चयात्मकः । इन्द्रियंच मनोप्येये विशेषात्तत्पृथक कृतम् । २६ ।

सुखादिमानसे ज्ञाने तेनप्रत्यक्षलक्षणम् । व्याहन्यतेननातो ऽन्यलक्षणानुक्ति दूषणम् । २७ ।

सू०—अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टंच । ५ ।

त०—तत्पूर्वं व्याप्तलिङ्गस्य लिङ्गिनो ज्ञानतोयतः । अनुमानंत्रिधातस्मात्कारणात्कार्यतो ऽन्यतः । २८ ।
सद्धान्वयीयथापूर्वःपरिशेषोद्विधाभवेत । केवलोव्यतिरेकीचान्वयीचेत्य वधार्यताम् । २९ ।

सू०—प्रसिद्धसाधर्म्यात्साध्यसाधन मुपमानम् । ६ ।

त०—प्रसिद्धधर्म्मसाधर्म्यादुपमानप्रसाधनम् ।

संज्ञायाः सञ्ज्ञि सम्बन्धः फलंतस्य प्रदर्शितम् । ३० ।

सू०—आप्तोपदेशः शब्दः । ७ ।

त०—आप्तोपदेशः शब्दः स्याद्दृष्यार्यम्लेच्छजातितो नवाशिष्टोभवेदाप्तो यथादृष्टवचायतः । ३१ ।

सू०—तद्द्विविधं दृष्टाऽदृष्टार्थत्वात् । ८ ।

त०—द्विधा दृष्टार्थकोलोके वेदेऽदृष्टार्थको भवेत् । प्रमाणमर्थ सिद्ध्यर्थस्तेनान्वीक्षा प्रसिद्ध्यति ।३२। इति प्रमाणानि,

सू०—आत्मशरीरेन्द्रियार्थ बुद्धिमनः प्रवृत्तिदोष प्रेत्यभावफलदुःखा ऽपवर्गास्तु प्रमेयम् । ९ ।

त०—आत्मादेहश्चेन्द्रियाणि तदर्थोज्ञानमानसे । प्रवृत्ति दोषौविज्ञेयौ प्रेत्यभावः फलंतथा । ३३ ।

अपवर्गःप्रमेयंस्यादपवर्गप्रसिद्धये । मानैर्विचार्य-मन्यच्चतन्त्रासिद्धंनखण्डयते । ३४ ।

सू०—इच्छाद्वेष प्रयत्न सुखदुःखज्ञानान्यात्मनो लिङ्गानि । १० ।

त०—उपादित्सा जिहासादि रिच्छाद्वेषश्च साधनम् ।
दर्शनप्रतिसन्धानादात्मा तल्लक्षणोमतः । ३५ ।

प्रत्नश्च सुखं दुःखं ज्ञानमेते प्रकीर्तिताः । दर्शनप्रति
सन्धानाल्लिङ्गभूतास्तदा श्रिताः । ३६ ।

सू०—चेष्टेन्द्रियार्थाश्रयः शरीरम् । ११ ।

त०—मसर्वेन्द्रिय विज्ञाता क्षणिकं ज्ञानमस्यतु ।
यदाश्रितंसचेष्टार्थ साधनश्रयलक्षणः । ३७ ।

देहइत्युक्तएषोऽपि चेष्टतेऽर्थस्य सिद्धये । साधनानि
यदायत्तान्यतो ऽयं स्यात्तदाश्रयः । ३८ ।

सू०—घ्राणरसनचक्षुस्त्वक श्रोत्राणीन्द्रियाणि भूतेभ्यः
। १२ ।

पृथिव्यापस्ते जोवायुराकाशमिति भूतानि । १३ ।
गन्धरसरूप स्पर्शशब्दाः पृथिव्यादि गुणास्तदर्थाः
। १४ ।

त० --घ्राणंचरसनं चक्षुस्त्वक्श्रोत्रे साधनानिनः ।

समाख्ययैवलच्द्याणि तादस्थ्यात्वकूचकीर्तिता । ३९ ।

भूतेभ्यश्चैवजायन्ते तानिभूमिर्जलंतथा । तेजोवायुश्च-खंतेषांगुणा गन्धोरसस्तथा । ४० ।

रूपंस्पर्शस्तथा शब्दअर्थाएते निरूपिताः । अग्रिमा-गत्वतश्चैते विशिष्टास्तस्यतस्यहि । ४१ ।

सू०—बुद्धिरूपलब्धिर्ज्ञानमित्यनर्थान्तरम् । १५ ।

त०—बुद्धिर्नो सांख्यसिद्धाया किन्तुज्ञानंचचेतना । उपलब्धिश्चपर्याया नचान्येऽनुभवादपि । ४२ ।

सू०—युगपज्ज्ञाना नुत्पत्तिर्मनसो लिङ्गम् । १६ ।

प्रवृत्तिर्वाग् बुद्धिशरीरारम्भ इति । १७ ।

त०—स्मृतिः शब्दोऽनुमास्वप्नः संशयः प्रतिभासुखे प्रत्यक्तामिच्छोहादिश्च मनोलिङ्गमुदाहृतम् । ४३ ।

अयौगपद्यं ज्ञानानामपरंलिङ्ग मुच्यते । प्रवृत्तिर्वाङ्मनो-देहैः सत्यादिर्दशधात्रिधा । ४४ ।

सू०—प्रवर्तना लक्षणादोषः । १८ ।

पुनरुत्पत्तिः प्रेत्यभावः । १६ ।

प्रवृत्तिदोष जनितोऽर्थः फलम् । २० ।

त०—प्रवृत्ति लक्षणदोषाः प्रेत्यभावः पुनर्जनिः ।
मुख्यंफलं सुखंदुखं हेयोपादेयताद्वयोः । ४५ ।

गौणंतदर्थं विश्वंस्यात् प्रवृत्यादोषयुक्तया । जनितो
ऽर्थोहिसर्वोऽयं दुःखकृत्सुखकृन्मतः । ४६ ।

सू०—बाधनालक्षणं दुःख मिति । २१ ।

त०—बाधनालक्षणं दुःखं हेयोपादेयधारया ।
तरङ्गवज्जायमान मामुक्तेः सकलंभवेत् । ४७ ।

सू०—तदत्यन्त विमोक्षोपवर्गः । २२ ।

त०—तदत्यन्त विमोक्षोपवर्ग स्तद्विरहात्पुनः । नचेष्टं
विषसंपृक्तजन्मभोक्तुमलं यतः । ४८ ।

नित्यंसुखं भवेन्मुक्तौ व्यक्तमाहुस्तरांपरे । तन्नसम्यङ्न
तद्धेतुर्नित्यः सांसारिकेसमः । ४६ ।

तथात्वे दुःखकालेऽपिसुखमास्वाद्यतांयदि । वृथातद्धान

संसिद्ध्यै प्रपञ्चोऽयं प्रवर्त्यताम् । ५० ।

जन्यत्वेसानतद्धेतुर्मुक्ते देहाद्यभावतः । नधर्ममात्रसापेक्षो-मनोयोगोऽपिकारणम् । ५१ ।

तथात्वेऽपिचजन्यत्वं धर्मएवविकल्प्यताम् । अनित्येन सुखंमुक्तो नित्येऽमुक्तोऽपि मुच्यताम् । ५२ ।

शरीरं न विरोध्यत्रहेतुर्नैवानिरोधकः । नित्यदेहोऽप्य दृष्टोऽत्र सुखंनित्यं च नक्वचित् । ५३ ।

तस्मादागम शब्दोऽपि दुःखा भावंवदेत्सुखम् । भारनाशे सुखीजातो भारवाही यथाभवेत् । ५४ ।

रागःसुखस्य यावत्ते नतावन्मुक्तिराश्रिता । हीनरा-गस्यकिंते स्यात्तत्सुखेन प्रयोजनम् । ५५ ।

सू० समाना नेकधर्मोपपत्तेर्विप्रतिपत्ते रुपलब्ध्य नुपलब्ध्य व्यवस्थातश्चविशेषा पेक्षातो विमर्शः संशयः ॥ २३ ॥

त० समान धर्म विज्ञानात्स्थाणौ पुरुष संशयः । विशेषा-पेक्षया पूर्वदृष्टार्थ स्मृति तोभवेत् । ५६ ।

अनेक धर्मो वैधर्म्यं शब्दे सन्देह कारकम् । श्रावणत्वं-
ततोद्रव्यं गुणोवेत्यादि संशयः ॥ ५७ ॥

विप्रति पत्तिरात्माऽस्तिनास्ति चेत्युपदर्शनम् । मन्तुः
संदेहकृत्प्रोक्तं चित्तंदोलायते ततः । ५८ ।

उपलब्धिर्भ्रान्ति भित्योः सदसद्गामिनी यतः ।
विशेषा पेक्षयातेन सन्देहं जनयेत्ततः । ५६ ।

आवृतेश्चसतोऽज्ञानमसतोऽतो ऽव्यवस्थिता । सन्देहे
ऽनुपलब्धेश्चाव्यवस्थाकारणं भवेत । ६० ।

किन्त्विदंद्वय मन्त्योक्तं पूर्वोक्तैः सहितं भवेत् । कारणं
न पृथक्कृतेन वार्ति के लक्षणत्रयम् । ६१ ।

कीर्तितंभाष्यकारस्तु कारणत्वंप्रदर्शयन् न खण्डनीयः
संयोज्य लक्षणं त्रितयं क्रियाः । ६२ ।

सू०-यमर्थमधिकृत्य प्रवर्त्तततत्प्रयोजनम् ॥ २४ ॥

लौकिकपरीक्षकाणां यस्मिन्नर्थेबुद्धिसाम्यं सदृ-
ष्टान्तः। २५ ।

त—यमुद्दिश्यप्रवृत्तिःस्याद् जयाद्यर्थं
प्रयोजनं कीर्त्तितं सच दृष्टान्तःसम्मतो लोकशास्त्रयोः ।६३।
यथावत्स प्रमाणं योमतोऽर्थोवार्थ सम्पतिः ॥

सू—तन्त्राधिकारणाभ्युपगमसंस्थितिः सिद्धान्तः ॥२६॥
सर्वतंत्रप्रतितन्त्राधि करणाभ्युप गमसंस्थित्यर्थान्तर भावात ॥ २७ ॥

त—सिद्धान्तो निखिलैकैकतन्त्र सिद्धोऽपिचोच्यते ॥६४॥
अधिकरण सिद्धान्तो ऽभ्युपगत्याच योभवेत । चतुर्धा-तन्त्र भेदेन त्रिधाप्युक्तोमनीषिभि ः । ६५ ।

सू—सर्वतन्त्रा विरुद्धस्तन्त्रे ऽधिकृतोऽर्थः सर्वतंत्र-सिद्धान्तः । २८ ।

सू—समान तन्त्रासिद्धः परतन्त्रासिद्धः प्रतितन्त्र सिद्धान्तः । २६ ।

यत्सिद्धावन्यप्रकरण सिद्धिः सोऽधिकरण सि-द्धान्तः । ३० ।

अपरीक्षिता भ्युपगमात्तद्विशेषपरीक्षण मभ्युपगम सिद्धान्तः ॥ ३१ ॥

त—सर्वतन्त्राविरुद्धो यस्सआद्यः परिकीर्तितः। प्रमाणै र्थविक्तिस्स्यादेकमात्रमतोऽपरः । ६६ ।

अदृष्टाद्भूतसर्गोऽयमित्यादिस्वमतं यथा । उपोद्घा तोऽर्थसिद्ध्यर्थ स्तृतीयः समुदाहृतः ॥ ६७ ॥

आत्मसिद्धौयथास्वेऽर्थे नियतावुद्धयस्त्वति विशेषार्थ-म्परोक्तस्य स्वीकृतोऽप्यमतोऽपरः । ६७ ।

सू—प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। ३२ ।

त—प्रतिज्ञासाधनंचोदाहरणोपनयस्तथा । निगम श्चेत्यवयवाः वाक्यंन्यायोऽखिलंभवेत ॥ ६८ ॥

सू—साध्यनिर्देशःप्रतिज्ञा ॥ ३३ ॥

त—प्रतिज्ञासाध्यनिर्देशोऽनित्यः शब्दः प्रकीर्त्तितः। साध्योधर्मिणि धर्मोवा धर्मधर्मी विशेषणात ॥ ६९ ॥

सू०—उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥ ३४ ॥
तथा वै धर्म्यात ॥ ३५ ॥

त०—उदाहरणसाधर्म्यात्साध्यसाधनमिष्यते ॥ वै
धर्म्याच्चाद्विधाहेतुर्जन्यत्वं वाग्घटात्मनाम् । ७० ।

सू०—साध्य साधर्म्यात्तधर्मभावीदृष्टान्त उदाह-
रणम् । ३६ ।

तद्विपर्ययाद्वाविपरीतम् ॥ ३७ ॥

त०—एवं साधर्म्यं दृष्टान्तः साध्य साधनताग्रहे ।
घटो यथास्तिशब्दस्यैवधर्म्यैवैपरीत्यतः । ७१ ।

सू०—उदाहरणा पेक्षस्तथेत्युप संहारोनतथेति वा
साध्यस्योपनयः । ३८ । हेत्वपदेशात्प्रतिज्ञायाः । पुनर्व-
चनं निगमनम् । ३९ ।

त०—उभया पेक्षएवंहि साधनो पनयो भवेत । तथोप
संहृतिः पूर्वानतथेत्यपरामता । ७२ ।

साधनं साधनत्वेन निश्चित्य तद्विशेषणात् प्रतिज्ञायाः पुनर्वाक्यं निगमस्तेन वाग्जनिः ॥ ७३ ॥

प्रमाणान्यत्र सर्वाणि प्रदर्श्यन्ते परस्यतु ॥ एवंवाक्य-समाप्तिः स्यात् नान्यथा काङ्क्षया भवेत् ॥ ७४ ॥

सू०—अविज्ञाततत्वेऽर्थेकारणोपपत्तितस्तत्वज्ञानार्थमूह-स्तर्कः ॥ ४० ॥

त०—प्रमाणैरर्थे सासिद्धौ सहाय्यं कुरुतेपुनः । तर्को-ऽविज्ञाततत्वेऽर्थे कारणस्योपपादनम् ॥ ७५ ॥

वैपरीत्यं विपक्षेसा वूहोदेहःप्रवृतिजः । नाकृताभ्यागमो दृष्टो विपरीते प्रसज्यते ॥ ७६ ॥

सू०—विमृश्यपक्ष प्रतिपक्षाभ्या मर्थावधारणं निर्णयः । ४१ ।

त०—निर्णयः संशयेन्यायादर्थस्यावधृतिर्हिया । तदन्तं प्रतिपक्षत्वंसाकाष्ठासत्रिधा भवेत् ॥७७॥

मत्यन्ते संशयान्यस्य स्वरूपेणा वगम्यते । शास्त्रे-
वादे विमर्शश्चन्यायाज्जल्पे निरुक्तितः । ७८ ।

इतिनिगदितमादौ निर्णयान्तं प्रमेयम् इदमसितमलानां
क्षालनं हेममेये । जनयतु जगतीं स्वांसाधितार्थां तदर्थं
प्रचरतुच तदर्थों वादजल्पप्रचारः ॥ ७६ ॥

इति श्रीत्रिवेदिपण्डित हरिदत्तशर्मभिर्विरचितायां
प्रथमाध्याय प्रथमाह्निक तत्वसुधालहर्य्यां आदिमस्तरङ्गः
समाप्तः ।



अथ द्वितीयस्तरङ्गः प्रारभ्यते ।

आनन्दकोशो रसदोगणेशः स्वदानवर्षा जलविन्दुपातैः सम्मार्जयन् विघ्नतमोनिशायां तारागणं वोधयतिस्व-शक्तया । १ ।

सू०—प्रमाणतर्क साधनोपालम्भः सिद्धान्ता विरुद्धः पञ्चावयवो पपन्नः पक्षप्रातिपक्षपरिग्रहोवादः । १ ।

त०—क्रमतोऽथाविविच्यते परंह्युपजीव्यः प्रथमोगतोयतः ।
इहवादःपरिकीर्तितः सनोयदिपक्षप्रतिपक्षयोगतः । २ ।
प्रत्यक्षवादोऽपिप्रमाणतर्क संसाधनोत्पादनरूप एव ।
परन्तु वाक्यैःसानिरुक्तरूपोननिग्रहास्ते प्रभवन्तिचात्र । ३
सिद्धान्तहानिश्च विरोधएकोन्यूनाधिकत्वेप्पनु मन्वते-ऽतः महर्षयो भेदकमास्थितास्तैर्वादस्य जल्पस्य यत-स्तादाहुः ४ ।

यथोक्तोपपन्नश्छलजाति निग्रहस्थानसाधनो पालम्भ-जल्पः । २ ।

प्रमाणतर्काश्रितसाधनादिः छलेनजात्या किलनिग्रहैश्च

यस्साधनं खण्डन माश्रितः स्यान्न्यायः सजल्पो मुनिभि-
र्निरुक्तः । ५ ।

छलादिकंनैवसुसाधयेन्नो एवं प्रवाच्यं पर खण्डनेन ।
स्यान्निर्णयोऽतः प्रतिवादिमुद्रया स्यात्साधकं भिश्रित-
साधनेन । ६ ।

सू०—सप्रति पक्षस्थापन हीनो वितण्डा । ३ ।

सस्थापनाहीनतया वितण्डा निरुच्यते सन्सफलोप्यनुक्तया।
येऽहेतवो हेतुसमा विभक्तयाते हेतुदोषाभणिता मुनीन्द्रैः।७।

सू०—सव्यभिचार विरुद्ध प्रकरण समसाध्य समकालातीता
हेत्वभासाः ॥ ४ ॥

सव्यभिचार विरुद्धौ प्रकरण समसाध्य समादृष्टाश्च ।
कालातीत विशेषा हेत्वाभासा निगदितास्ते । ८ ।

सू०—अनैकान्तिकः सव्यभिचारः । ५ ।

त०—अनैकान्ति को योन पक्षैकगामी समुक्तः
सआद्यो यथा वाक्वनित्या यदा स्पर्शहेतोः समुक्ता
सजन्येगतो हेतुरेवंनतत्साधनंस्यात । ९ ।

सू०—सिद्धान्त मभ्युपेत्यतद्विरोधी विरुद्धः । ६ ।

त० स्वासिद्धान्तमुक्तं परित्यज्य साध्यं यदाभाव सिद्धो निरुक्तोत्र हेतुः। विरोधीत्यतोऽयं विरुद्धः समुक्तो भवे नित्यतातश्च्युतः सन्ननाशात् ।१०।

सू० यस्मात्प्रकरण चिन्तास निर्णयार्थ मपदिष्टः प्रकरण समः,

त० प्रकरणमनुपतितोऽसौ हेतुः स्वसम विदुष्टात्मा निर्णयजननेचोक्तः प्रकरण समश्च भवेदेषः ।११।

सू० साध्या विशिष्टः साध्यत्वात्साध्य समः ८ कालात्ययापदिष्टः कालातीतः ।९।

त० साध्य समोऽस्यचतुल्यः कालातीतो विभिन्न कालस्थः। जन्यो नित्यगधर्मा भावादिति जायते प्रथमः ।१२।

जन्यग धर्मा भावाततद्वत्कल्पोऽत्र वन्ध्या जो यस्मा देष परः स्याद्द्रव्य छाया थवायानात् ।१३।

नित्यः शब्दो युक्तोयोगेन व्यञ्जितो यतस्त्वेषः।
तत्रन शब्दो योगे योगाद् ग्रेपुनः शब्दः ।१४।

सू० वचन विघातोऽर्थ विकल्पोपपत्याछलम् १.०

तत्रिधिधं वाक् छलं सामान्यच्छलं मुपचारच्छ
लंचेति ।११।

त० अर्थ विकल्पैःकल्पो वचन घातश्छलं तत्स्यात्
सच वाक् सामान्यच्छलमुपचारच्छल मिदं भवेत्रेधा १५

सू० अविशेषाभिहितेऽर्थे वक्तरभिप्रायवशादर्थान्तर
कल्पना वाक्छलम् ।१२।

त० नव कम्बलः समुक्ते यद् सम्मतार्थ कल्पना
हेतोर्न्ननवास्येतिनिषेधो वाचि समुंक्तहिवाक्छलं
तच्च । १६ ।

समाधिरस्याविज्ञेयः शक्या अर्थाव बोधने । योग्यता
सहकारी स्यात्तद्बोधनप्रमा भवेत् ।१७।

चरितार्थ स्यतेनैवा सम्भूतार्थ कल्पना । विनानिया
मकंखण्डनार्थ मेव न युज्यते । १८ ।

सू० सम्भवतोऽर्थस्याति सामान्य योगाद सम्भूतार्थ कल्पना सामान्य च्छलम् ।१३।

त० सम्भूतार्थ सजातीये अभावे नास्य खण्डनम् सामान्य च्छल मुक्तंयद्विद्वान् विप्रस्तथा भवेत ।१९।

व्रात्येऽभावाद्वचोयुक्त मित्युक्तिस्तदुदाहृतिः । अविवादित हेतुत्व वाक्यदोषोन दर्शनात ।२०।

सू० धर्म विकल्प निर्देशेऽर्थसद्भाव प्रतिषेध उपचारछलम् ॥ १४ ॥

त० गौणयावाक्य प्रयोगेतु शक्याभावेन खण्डनम् । शब्द धर्म विकल्पे ना परस्याऽर्थस्य दर्शनात ।२१।

जल्पन्ति पुरुषा लोके मञ्चस्थानतुमञ्चकः । एवं समुच्यते यत्रमैव पुरुष गर्हणा ।२२।

सू० वाक् छलमेवोपचार च्छलंतद विशेषात् ।१५।

नतदर्थान्तर भावात ।२६।

त० यद्यपीदं वाक्छलंस्यात्परन्त्वत्र प्रदर्श्यते । अन्य स्यार्थस्य सत्तातुतेनभेदो मतोभवेत ।२३।

सू० अविशेषेवाकिंचित्सा धर्म्या देकच्छल प्रसङ्गः १७

त० किंचित्सा दृश्यतो भेदो निन्होतुं नहि शक्यते
कथं चैव विभागः स्याच्छल सामान्य लक्षणात् ।२४।

सू० साधर्म्य वैधर्म्या भ्यां प्रत्य वस्थानं जातिः १८

विप्रतिपातिर प्रति पात्तिश्चनिग्रह स्थानम् ।१९।

तद्विकल्पाज्जातिनिग्रहस्थान वहुत्वम् ।२०।

त० साधर्म्येण च वैधर्म्या तूखण्डनं जाति रिष्यते
विपरीता कुत्सिता वा प्रतिपत्तिश्चया भवेत ।२५।

अप्रति पत्तिस्तथा सा निग्रह स्थान मुच्यते जाते
श्चानिग्रहस्यान्ये भेदास्तद्भेदतोऽभवन् ।२६।

इति निगादित एवो द्देशरूपः पदार्थः दिशतु सकल
वाचां स्थान मार्गा वकाशम् । मुनिरपितएव स्वाशयं
प्राहतत्र सकलनरीहतांथ प्रार्थितार्थस्य सिद्धिः ।२७।

त्रिवेदि पण्डित हरिदत्त शर्म्म भिर्विरचितायाः
प्रथमा ध्याय द्वितीयान्हिकतत्व सुधाल हर्या द्वितीय
स्तरङ्गः समाप्तः प्रथमश्चाध्यायः ।

# अथ द्वितीयोऽध्यायः ॥

सू० समानानेक धर्म्माध्यवसायादन्यतरधर्म्मा ध्यवसायाद्वान संशयः ।१।

त० गज मुखं भुवनावन कारणम् भव भय प्राति हर्तृ मितीरणम् । कृतिषु विघ्न महोदधितारिणं सततमात्म निचिन्तय ईश्वरम् ।१।

विभाग उद्देश न मुक्त पूर्वं परीक्षणं प्राप्तमतस्तु माने । पुरापरीक्षासु विमर्श एव ततो विवेच्यः प्रथमं विमर्शः ।२।

समान धर्म्मस्य न हेतुताऽत्र ज्ञाना त्तथा दर्शन तश्च धर्म्मे । धर्म्मिण्ययतो निश्चित आश्र यस्याप्य भावतः कार्य विजातितश्च ।३।

भिन्नाश्रयत्वाच्च न संशयःस्या दव्याप्तितो वार्तिक कारआह । नजातुरूपेणरसे विमर्शो विशेषवित्तेरपि तान्नि वृत्तेः । ४ ।

सू० विप्रति पत्य व्यवस्थाऽध्यवसायाच्च ।२।

विप्रति पत्तौचसम्प्रतिपत्तेः ।३।

अव्य वस्थात्म निव्यवस्थितत्वाच्चाव्यवस्थायाः ।४।

तथात्यन्त संशयस्तद्धर्म्मे सातत्योपपत्तेः ।५।

त० तथा विप्रति पत्तौ च संशया भावकल्पनम् ।
विभिन्न दर्शनैर्ज्ञाते संशयो नाहियौक्तिकः ।५।

नचोपलम्भा नुपलम्भ भेदव्यव स्थितेर्धर्म्मामितर भावात् । विमर्श सिद्धिर्मत भेदासिद्धेर्व्यवस्थितत्वान्नाहिचा-व्यवस्था ।६।

समान धर्म्मसात्तत्या द्धर्म मात्रस्यहेतु तायदि स्या-त्संशयस्यै वंनोच्छित्तिः प्राप्नु यात्तव ॥ ७ ॥

सू० यथोक्ताऽध्यवसायादेवतद्विशेषापेक्षात् संशयो-नात्यन्त संशयोवा ।६।

यत्र संशयस्तत्रैवमुत्तरोत्तर प्रसङ्गः ।७।

त० विशेषा पेक्ष साधर्म्यज्ञानात्संशय ईर्य्यते । नैवं तवोक्तदोषस्यद्वितयं मन्मते भवेत ।८।

सूत्रेय दुपपत्तीति पदं विज्ञान साधकम् । बोधः पूर्व मितार्थस्य सांप्रते संशयो भवेत ।९।

धर्म्म जिज्ञासया धर्म विज्ञाने हेतुतामते । नार्थभेदोऽपिदोषःस्यादन्वयान्नच जातिभित् । १० ।

तथाविप्रति पत्तेश्च प्रतिसन्धान तो भवेत । धर्मि जिज्ञासयातत्र शब्दभेदो नदूषणम् । ११ ।

अव्यवस्था स्थितौयुक्ता मताऽनुज्ञाहिवादिनां । विरुद्ध शब्दवैकल्पात्पदार्थोनहि खण्डितः । १ ।

पुरा संशयमात्रस्य परीक्षाक्रमबोधनम् । सूत्रे सर्वत्र कार्यत्वाभिधानादि तियुज्यते । १३ ।

सू०—प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्या सिद्धेः । ८ ।

पूर्वंहि प्रमाणसिद्धौनेन्द्रियार्थसन्निकर्षात्प्रत्यक्षोत्पत्तिः । ९ ।

पश्चात्सिद्धौनप्रमाणेभ्यः प्रमेयसिद्धिः । १० ।

युगपत्सिद्धौ प्रत्यर्थनियतत्वात क्रमवृत्तित्वाभावो बुद्धीनाम । ११ ।

त०- -प्रत्यक्षादि प्रमाणानांमेय सिद्धौनहेतुता। त्रैकाल्या सिद्धितः साचदर्श्यते शृणुसाम्प्रतम् । १४ ।

प्रमाणे पूर्वसिद्धेहि करणार्थस्य सन्निधिः । कारणं न भवेत्तत्रलक्षणा सङ्गतिःस्फुटा । १५ ।

मे यस्यपूर्वं संसिद्धौ मानाधीनानमेयता । युगपत्सिद्धि-वस्तुश्च न क्रमात्कार्यहेतुता । १६ ।

यौगपद्यमपिज्ञाने जायतां तन्मते ध्रुवम् ।वार्त्तिकस्य समाधानं सूत्रजातिश्च वक्ष्यते । १७ ।

यथा दर्शनमर्थस्य सिद्धिर्नार्थस्य निर्वृत्तिः । तेन मेयस्य सत्वेपि प्रमाणात्सिद्धिरिष्यताम् । १८ ।

मास्यते मेयतैवंस्यात कारके कालयोगतः । यथाहि पक्ष्यमाणेऽपिपाचकत्वा ऽपदेशनम् । १९ ।

सू०—त्रैकाल्या सिद्धेः प्रतिषेधाऽनुपपत्तिः । १२ ।

सर्व प्रमाण प्रतिषेधाच्च प्रतिषेधाऽनुपपत्तिः । १३ ।

तत्प्रामाण्ये वान सर्वप्रमाण विप्रतिषेधः । १४ ।

त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः ।१५

त०—प्रतिषेधे निषेध्येचत्रैकाल्याभावकल्पनम् । त्वत्प्रदर्शितरीत्या चेन्निषेधः कस्यतद्वद । २० ।

मानमात्रस्य पक्षत्वे स्ववाक्येहेतुवर्जनात् असिद्धिनिग्रहोस्यात् महेतुर्नहिसाधकः । २१ ।

तथात्वेसाधकत्वेच परःकेनात्रखण्डयताम् । तत्प्रमाणत्वसिद्धौवा मानमात्रेनखण्डनम् । २२ ।

ततोदृष्टा विलोपेनसाधनात्तसिद्धिरिष्यताम् । निर्वर्तकत्वमालोच्यंन शब्दाद्वाद्यसिद्धिवत् । २३ ।

सू०—प्रमेयताचतुला प्रामाण्यवत् । १६ ।

प्रमाणतःसिद्धेः प्रमाणानां प्रमाणान्तर सिद्धिप्रसङ्गः । १७ ।

तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिः । १८ ।

न प्रदीपप्रकाशसिद्धि वत्तत्सिद्धेः । १९ ।

त०—प्रमाणानांकथं सिद्धिरितिचेत्तेभ्यएवतु । तुलाप्रमाणेदृष्टाहि धृत्यातस्यैवमेयता । २४ ।

साक्षात्करोमि लिङ्गेनमिनोमीत्युपमिनोमिच शब्दयामीतिसिद्धा करणादीनांच कर्तृता । २५ ।

न चैवमनवस्था स्यान्मानान्तरजानं विना । मानंम्वाधीनासिद्धं चेन्मेयैःकिमपराध्यते । २६ ।

न स्वतोनचभिन्नात्तु क्लृप्तैरेवेतिसंस्थितिः । जिज्ञासाविनिवृत्तौतु जानामीतिनिवर्त्तते । २७ ।

सू० प्रत्यक्षलक्षणाऽनुपपत्तिर समग्र वचनात् २०

नात्ममनसोः सान्निकर्षाभावे प्रत्यक्षोत्पातिः ।२१।

त० इन्द्रियार्थस्य सम्बन्धो हेतुः प्रत्यक्षलक्षणे । उपात्तात्मनोयोग आत्मनान्यूनताऽत्रचेत् ।२८।

तन्न साधारणं चेतोज्ञान मात्रेतदागतम् व्याप्येन कार्य जनने व्यापकं कारण स्वयमं ।२९।

विशेष कारणं तूक्तंनान्यद् व्यर्थत्व दूषणात् । न कारणे भ्याव्या वृत्तिस्तेन कुत्राऽस्तिचोनता ।३०।

सू० दिग्देश कालाकाशेष्वप्येवंप्रसङ्गः ।२२।

ज्ञान लिङ्गत्वाच्चांत्मनोनानवरोधः ।२३।

तदयौग पद्यालिङ्गत्वाच्चनमनसः ।२४।

प्रत्वत्त निमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्यस्व-शब्दे न वचनम् ।२५।

सुप्तव्यासक्तमनसांचेन्द्रियार्थयोः सान्निकर्ष निमित्तत्वा त् ।२६।

तैश्चापदेशोज्ञान विशेषाणाम् । २७।

त० एवंदिग्देशकालेषु विप्रसङ्गो विभाव्यताम् । दूषणं भूषणं लक्ष्य मात्र वृतेस्तु लक्षणे ।३१

ज्ञानोक्त्या त्वाश्रयाक्षिप्त आत्माऽसद्यस्कतोमनः। ज्ञानत्वोक्त्यै व ससर्गो ज्ञायतां कारणानिहि ।३२।

स्वशब्दतोनिरुक्तोऽयं योगोयः साधनार्थयोः । असा-मान्यः सप्रत्यक्ष हेतुरित्य वधार्यताम् ।३३।

कदाचिदिच्छा पूर्वस्याज्ज्ञान मात्मानियत्नतः प्र-णिधानवशात्कापिसुप्त व्यासक्तयोर्यतः ।३४।

स्वापभञ्जक प्रत्यक्षं व्यासङ्गस्यनिवर्त्तकम् । तदर्थेन्द्रिय सम्बन्ध प्राबल्यादवसीयताम् ।२५।

चाक्षुषो रूपबोधोमे इत्यर्थेन्द्रिय शब्दतः । प्रत्यक्ष व्यपदेशश्चतदुक्तौ हेतुरिष्यताम् ।२६।

सू० व्याहतत्वादहेतुः ।२८।

नार्थ विशेष प्राबल्यात् ।२९।

त० प्राचै वंव्याहतिर्वाच्या सुप्तादौव्यभिचारतः नतत्रहेतुताभावः प्राधान्यंतु प्रदर्श्यते ।२७।

सू० प्रत्यक्षमनुमानमेकदेशग्रहणा दुपलब्धेः ।३०।

न प्रत्यक्षेणयाव तावदप्युपलम्भात ।३१।

नचैक देशोपलब्धिरवयविसद्भावात ।३२।

त० अवयवान्तरे दृष्ट्या ऽवयवान्तर साधनम् । वृत्तइत्यनुमानंस्यात्प्रत्यक्षंनास्त्यभावतः ।३८।

नहि सर्वावयवगं प्रत्यक्षं कस्य चिद्भवेत् । एवमाहतुयः कश्चित न तद्युक्ति मनोरमम् ।३९।

नावयवराशिपक्षे वयवान्तर दर्शनात । वृत्तवुद्धिः सुसम्पादाऽतिरिक्तंनैवशङ्कनम् ।४०।

किंचयावन्मतं दृष्टमन्य सिद्ध्यर्थ मुच्यते । तावताव्याहतिर्जीता मत्यक्तोरी कृतेः स्वयम् । ४१ ।

यत्राप्येको गृहीतस्ते एकदेशिसहस्थितः । कृत्स्नत्वेनन दृष्टश्चेन्नैक देशदृशोभवेत । ४२ ।

सू०—साध्यत्वादवय विनिसन्देहः । ३३ ।

सर्वाऽग्रहणेमव यव्यसिद्धेः । ३४ ।

त०—अत्राहकश्चित सन्देहोऽवयव्य सिद्धितोभवेत । तन्नातीन्द्रियाणुत्वात तद्योगस्यापिमानुषैः । ४३ ।

अग्रहात्कस्य चिज्ज्ञानं नेत्यासिद्धंसमं भवेत । इष्टापत्तौतुदोषः स्यात्स्फुटानुभवनिन्हवः । ४४ ।

सू०—धारणा कर्षणो पपत्तेश्च । ३५ ।

त०—धारणा कर्षणेदृष्टे एकदेशिनिकेवले । संग्रहादेवभाष्येतु मतांदिङ्नागकीर्त्तितम् । ४५ ।

भवेत्परन्तुपार्श्वादा वेकदेशीनवार्त्तिके । स्वीकृतस्तेन जत्वादावेकदेशीत्य दूषणम् । ४६ ।

वयंतुब्रूमोजत्वादि संगृहीतोऽभिप्रत्ययः । नैकदेश्यनुभूतो-ऽस्मात् भाष्यमेवंविभाव्यताम् । ४७ ।

विजातीयःसजातीयः संग्रहःकारणंद्वयम् । सजातीयो भवेदेकदेशिग्राहकएवतु । ४८ ।

धारणाकर्षणेतेन नसाक्षात्तस्य ग्राहकम् । संग्रहद्वारमा-श्रित्याऽवयविसाधनं क्रियात् । ४९ ।

वार्त्तिक एकदेश्युक्तिर्जत्वादिसंगृहीतगा । मतानुज्ञार्थ मुक्तासा नैकदेश्यन्तरार्थिका । ५० ।

सू०—सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणू नाम् । ३६ ।

त० नाना एकमियंबुद्धिः संहतेषूपजायते । सेनावनादि-वन्मैवंनाऽप्रत्यक्षग्रहो भवेत् । ५१ ।

सेनादेरणु मात्रस्यप्रत्येकस्यापि पक्षता । तस्यदृष्टान्त-

ताकस्मा द्विवादेतत्रतुल्यता । ५२ ।

अग्रेऽपिवक्ष्यते सूत्रे गौणान्मुख्यैक साधनम् । रूपा-
दावापितुल्योऽयंनियोगोह्यवधार्यताम् । ५३ ।

महत्वजाति संयोगस्पन्दादेरपि सिद्धये । एकदशी-
तुस्वीकार्योनान्यथा प्रत्ययो भवेत । ५४ ।

महाञ्छब्दः प्रतीतिस्तु कियान्नित्यवधारिते ।
साऽपिगौणा यथा विल्वेऽणुत्व मल्पत्वतो भवेत । ५५ ।

नाप्रत्यक्षस्य संयोगः कुराडलीनेति प्रत्ययात् । सिद्धोद्रव्या
श्रयागोऽवयवानां संयोग कृतो भवेत । ५६ ।

न जाति राश्रयज्ञान मन्तरातद्ग्रहाद्भवेत । एकदे-
शातिरिक्तोऽत एकदेशीविभाव्यताम् ॥ ५७ ॥

सू० रोधोऽपघातसादृश्येभ्योव्यभिचाराद नुमानम
प्रमाणम् । ३७ ।

नैकदेशत्रास सादृश्येभ्योऽर्थान्तर भावात । ३८ ।

त० रोधोऽपघात सादृश्य हेतु जा वृद्धि शब्दनम् ।

पिपीलकाण्ड संचारा वर्षा जात्य नुमापका: ५८।

नयुक्ता व्यभिचारात्तु नानुमानं प्रमाततः। मैवंवा-
धोऽनुमानस्य विशिष्टानुमितिः प्रमा ॥ ५६ ॥

तत्र दोषो न कश्चित्तु वक्तृदूषण मेवतत्। विशिष्ट
जलसंचार शब्दास्तत्राऽनु मापकाः ॥ ६० ॥

सू० वर्तमानाभावः पततः पतित पतितव्य कालो
पपत्तेः ३६।

तयोरप्य भावो वर्त्तमाना भावे तदपेक्षत्वात्। ४०।

नातीतानागतयोरितरेतरा पेक्षा सिद्धिः ॥ ४१ ॥

त० अनुमानंत्रिकालंचेतत्रके चिद्वदन्तिहि। न
वर्तमानकालोहि पततोऽतीतभावितः ॥ ६१ ॥

तन्न युक्तं वर्तमाना भावेऽतीताद्य सिद्धितः ॥
परस्प रस्य लब्ध्यत्वेऽप्यन्योन्या श्रयदूषणात् ॥ ६२ ॥

सू० वर्त्तमाना भावे सर्वाग्रहणं प्रत्यक्षा नुपपत्तेः ४२

कृतता कर्तव्य तोपपत्तस्तूभयथा ग्रहणम्। ४३।

त० प्रत्यत्तं वर्तमानस्य तदभावेऽग्रहोभवेत। सर्वस्य भूतभावित्वाद्धियते कर्मलौकिकी ॥ ६३ ॥

प्रतीतिर्वाध्यते चैवं वर्तमानं ततो मतम्। क्रियायाः सन्ततिस्त्वाद्यादारभ्यान्तन्तु बोध्यते ॥ ६४ ॥

धातुनासाविजातीयसजातीयक्रियादिभिः।
भिद्यमाना पिधात्वर्थस्ततोऽती तत्वभाविते। ६५।

तस्मात्त्रिकालिकंज्ञे यैलैङ्गिकं कालसा धनात्।

सू० अत्यन्तप्रायैकदेशसाधर्म्यादुप माना सिद्धिः। ४४।

प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्त दोषानु पपत्तिः। ४५।

त० उपमानं न सिद्धयत्ये तदाहुः केप्यलौकिकाः ६६

अत्यन्त प्रायधर्माणा मौपम्येति प्रसङ्गतः। न नियमः कश्चि देवेति मतंलेषा मुदीरितम्। ६७।

प्रसिद्धं येनयस्यैयत्र साधर्म्यं मुपमीयते। तेन तस्योपमानत्वं प्रतीतं कोनिवारयेत् ॥६८॥

सू०–प्रत्यक्षेणा प्रत्यक्ष सिद्धेः ॥४६॥

ना प्रत्यक्षे गवेय प्रमाणार्थ मुपमानस्य पश्याम इति ॥४७॥

तथे त्युप संहारादुपमान सिद्धेर्ना विशेषः ॥४८॥

त०–प्रत्यक्षो गवयो दृष्टेपुरा साधर्म्य तो मितः। शब्दार्थ बोधः शाब्दश्च किमर्था स्वप्रमाणता ॥६६॥

मैवं शाब्दार्थ बोधेन सादृश्ये ना वधारिते दृष्ट व्यक्तौतुसंज्ञाया विज्ञान मुपमाफलम् ॥७०॥

तथेति चोप संहारः परार्थानु मितौ कृतः। उपमानं न मानं मे वक्ता कस्मान्न लज्जते ॥७१॥

सू०–शब्दोऽनुमान मर्थस्याऽनुपलब्धेरनु मेयत्वात ॥४६॥

उपलब्धेरद्वि प्रवृत्तित्वात ॥ ५० ॥

सम्बन्धाच्च ॥ ५१ ॥

त०-शब्दोऽनुमान मर्थस्या प्रत्यक्षस्या नुमा नतः।
अद्धि प्रवृत्तको बोधः सम्बन्धार्थ ग्रहश्चते । ७२ ।

आप्तोपदेशमात्रेण स्वर्गाद्यर्थस्तु बोध्यते । तत्रै वद्धि
प्रवृत्तिश्च सम्बन्धो नहि युज्यते ॥ ७३ ॥

सू०-आप्तोपदेश सामर्थ्याच्छब्दादर्थ सम्प्रत्ययः ५२

पूरणप्रदाहपाटनानुपलब्धेश्चसम्बन्धाभावः । ५३ ।

शब्दार्थ व्यवस्था नाद् प्रतिषेधः ॥ ५४ ॥

सामयिक त्वाच्छब्दार्थ सम्प्रत्यस्य ॥ ५५ ॥

त०-अभेदोनैवभिन्नेनसाधनेन ग्रहो यतः ।
पूरणंदाहपाटौ स्युर्गुड़ाग्नि क्षुरवक्तृगाः ॥७४॥

शब्दार्थस्य व्यवस्था च भिन्न देश तया भवेत् ।
न संयोगात्तु सम्बन्धात्समयादेव तत्प्रमा ॥७५॥

सू०-जाति विशेषे चा नियमात् ॥ ५६ ॥

त०-अतो जाति विशेषेण यवादोर्भिन्न प्रत्ययः ।

आप्तोपदेशतोम्लेच्छेर्वेदे रूपादि गोनतु ।७६।

सू०—तद प्रमाण्यमनृतव्याघातपुनरुक्त दोषभ्यः५७

त०—अत्राहकश्चेद्वेदस्यपुनरुक्तिर्विघाततः ।

अनृतोक्तथान प्रामाण्य माप्तोक्ति व्याहते स्ततः ॥७७॥

पुत्र कामस्य यागेऽपिकृते पुत्रो न जायते । त्रिः

प्रथमां पुनरुक्तिश्च व्याहति श्चोदि ताऽऽहुतौ ।७८।

सू०—नकर्म कर्तृ साधन वैगुण्यात

त०—कर्म कर्तृ करणानां वै गुण्ये वैपरीत्यतः ।

योनि दोषाद्या गदोषाद्यजमा नेन्द्रि यदोषतः ।७९।

पुत्राऽप्राप्तौनवेदस्य वक्तोपालभ्यता भियात् ।

नान्यस्यरविभा दृष्टिर्भास्करस्यास्ति दूषणम् । ८० ।

सू०—अभ्युपेत्य कालभेदे दोषवचनात । ५९ ।

अनुवादो पपत्तेश्च । ६० ।

त०—अभ्यासेपुनरुक्तिःस्यात अनुवादे न कर्हि-

चित । अभ्युपेत्यपरित्यागे निन्दायांव्याहतिःकुतः ।८१।

सू०—वाक्यविभागस्यचार्थ ग्रहणात् । ६१ ।

विध्यर्थवादानु वादवचनविनियोगात् । ६२ ।

विधिर्विधायकः । ६३ ।

स्तुतिर्निन्दा परकृतिःपुराकल्प इत्यर्थवादः । ६४ ।

सू०—विधिविहितस्याऽनुवचन मनुवादः । ६५ ।

नाऽनुवादपुनरुक्तयोर्विशेषःशब्दाभ्या सोपपत्तेः ६६।

त०—विभज्यवेदवाक्यानिग्राह्योऽर्थः परमार्षितः ।
विध्यर्थवादानुवादवचनानां क्रमाद् भवेत् ॥ ८२ ॥

विधिर्विधायकस्तत्र स्वर्गकामोयजेतहि । स्तुतिर्निन्दा
परकृतिः पुराकल्पश्चकीर्त्तितः । ८३ ।

अर्थवादश्चतुर्धातु विधेरेवोपपत्तये । प्रशंसनं विधानाय
सर्वं जयातियागकृत् ॥ ८४ ॥

निषेधायचानिन्दा स्याद्गच्छेपतातिनीविधिः । चरका-
ध्वर्यवः कुर्युःपृषदाज्यंपरेकृतिः । ८५ ।

ऐतिह्यंपूर्वं मे तत्तुसामस्तोमं समूहिरे । नानृतत्वं ततःशङ्क्यं श्रद्धार्थे विधिसाधके । ८६ ।

सू०—शीघ्रतरगमनोपदेश वत्तद्भ्यासान्ना विशेषः

त०—विधानार्थं ततोऽन्यस्य तस्यत्रायदनूद्यते । विधिर्विहितानुवादो द्विविधः परिकीर्तितः । ८७ ।

नाभ्यासमात्रतोऽन्येपि पौनरुक्त्यंतुशङ्क्यताम् । द्विःपचेतिसामुक्तेतु गम्यते शीघ्रतः क्रिया ॥ ८८ ॥

सू०—मंत्रायुर्वेद प्रामाण्यवच्च तत्प्रामाण्यमाप्त प्रामाण्यात ॥ ६८ ॥

त०—मंत्र तो विषहानिश्चवैद्य का द्रोगमार्जनम् । दृष्टंतद्वक्त्सामान्या दृदृष्टे किंप्रलाप्यते ॥ ८६ ॥

नित्यत्वमात्रतोनैव प्रामाण्यं शब्दगंभवेत । अनाप्तोक्तेस्ततोऽल्पंस्यात तस्यवेदेप्रमाततः ॥ ६० ॥

इति सकल रहस्यं मानमात्रस्यचोक्तंमिति मपिवहतादेवात्मनोयेनतस्मात । अपिवदातिहिभाष्येतत्परीक्षार्थयत्नः

सकलकृतिहितार्थं साधनंसाधनाय ॥ ६१ ॥

इति श्री त्रिवेदि पण्डित हरिदत्तशर्म्मभि र्विरचितायां द्वितीयध्यायप्रथमाह्निकतत्व सुधालर्य्या स्तृतीयस्तरङ्गः समाप्तः ।



सू० न चतुष्टुव मेति ह्यार्था पत्ति सम्भवाभाव प्रामाण्यात ॥ १ ॥

त० विज्ञान कोशो मद दान गण्डो विघ्नैक दण्डोमति दान शौण्डः संसार चक्रा कृतिकारिशुण्डो जीयात्सविघ्नेश्वर सिद्धि भाण्डम् ॥ १ ॥

प्रत्यक्षादि विभागो मानेष्वास्थित तमोऽसमी चीनः। ऐतिह्यार्था पादनमसम्भवा भाव प्रामाण्यात २ ॥

यक्षो वटेऽस्तिपूर्वं विज्ञातं वृद्ध मार्गेण, आन्हिन भुङ्क्ते पीनश्चार्था दापा दयेद्धु जिनक्तम ३ ।

आढ़कसत्वे प्रस्थोग्राह्यस्तु सम्भवादस्ति । वर्षाभावो वायोरोधक मावेदयच्चसंयोगम् । ४ ।

सू०—शब्दऐतिह्यार्थान्तरभावादनुभावादनु मानेऽर्था पत्तिसम्भवा भावानर्थान्तर भावाच्चा प्रतिषेधः ॥ २ ॥

त०—मैवंप्रमाणभूतमैतिह्यंशब्दएवस्थात । अन्यत्रा नुमितित्वान्नान्यः प्रविभाजकोमाने । ५ ।

आपाद्यापादकतानव्याप्ति मन्तरा दृष्टा नाप्यविना भूतेर्थे सम्भवना भानप्रामाण्यम् ५ ।

सू०—अर्थापत्तिर प्रमाणमनैकान्तिकत्वात । ३ ।

त०—मेघाभावे वर्षाभावोक्तधा सत्वसत्तायाः आपादनमर्थादे तन्नोसम्यक् सतोऽदृष्टेः । ६ ।

सू०—अनर्थापत्ता वर्थापत्यभिमानात । ४ ।

प्रतिषेधाप्रमाण्यं चानैकान्तिकत्वात । ५ ।

तत्प्रामाण्ये वानार्था पत्यप्रामाण्यम् । ६ ।

त०—मैवंमेघेंकारणभावज्ञातुर्हितत्सत्वे । कार्यापादनमिष्टं तत्रादूषण मिदंजातम् ॥ ७ ॥

किञ्चित्कारण मिष्टंयत्रादो नैवतद्यु क्तम् । चेदेवंप्रणिषेधो युक्तोनस्यान्नसर्वगो यस्मात ॥ ८ ॥

अर्थापत्तिःका चिदुष्टासंखंडयेतवदस्येवम् ।

सुष्ठुस्थाताप्रमाणं तस्मान्न माननिह्नवोयुक्तः ॥९॥

सू०—नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥

लक्षितेष्व लक्षण लक्षितत्वाद् लक्षितानांतत्प्रमेय-

सिद्धिः ॥ ८ ॥

त०-ना भावः सविषयको ज्ञानं तस्याऽपिनो

सफलम् । नैवंलक्षण शून्यंतज्जैर्विज्ञायते हिसद्वस्त्रम् १०

सू०-असत्यर्थेना भाव इति चेन्नान्य लक्षणोप-

पत्तेः । ६ ।

तत्सिद्धेर लक्षितेष्वहेतुः । १० ।

न लक्षणा वस्थितापेक्षा सिद्धेः । ११ ।

प्रागुत् पत्तेरभावोप पत्तेः ॥ १२ ॥

आदिमत्वादैन्द्रिय कत्वात्कृतक वदुपचाराच्च १३

त०-भावे भावो वाच्यः कस्माद्वस्त्रे प्रकल्प्योऽसौ ।

अन्यत्राव गतोऽर्थस्तत्रासन्नुच्यते विशेषज्ञैः । ११ ।

सत्वेऽभावः कस्यत्येवं मातुशाङ्किष्ठाः । व्यक्तिविशेषे

दृष्टोऽन्यत्रासत्वे नवाच्यः स्यात् १२ ।

किं चाभावः पूर्ववस्तूत्पत्तेः स्थितोयएवासौ । मानत्वं नहि खण्डय किन्तु भिन्नत्वमेतेषाम् । १३ ।

शब्दो मानंचोक्तस्त आहुर्वादिनोवादान् ।

बहुधा परन्तुजन्योग्राह्यः कार्यैः समापदेशश्च ।१४।

तेनाऽयंतु विनाशीनित्यत्वं नेति मन्यते स्माभिः । व्यञ्जकवेला भेदादभि भवकृत्वाच्च नो व्यङ्ग्यः । १५ ।

सू०—नघटाभावसामान्यनित्यत्वान्नित्येष्वप्य नित्यवदुपचाराच्च ॥ १४ ॥

तत्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १५ ॥

सन्तानानु मानविशेषणात् ॥ १६ ॥

कारणद्रव्यस्य प्रदेशशब्देनाभिधानाद् नित्येष्वप्यव्यभिचार इति ॥ १७ ॥

त०—यद्यपिनाशेजातौनित्येहेतुत्रयंदृष्टम् । गौणंद्वितयं तेषांहेतुर्जातौ नचै वसन्तानः ॥ १६ ॥

सू०—प्रागुच्चारणादनुपलब्धेरावरणाद्यनु
पलब्धेश्च ॥ १८ ॥

तदनुब्धे रनुपलम्भादा वरणोपपत्तिः ॥ १९ ॥

अनुपलम्भादप्य नुपब्धिसद्भावान्ना वरणानुपलब्धि
रनुपलम्भात् ॥ २० ॥

त०—उच्चारणतः पूर्वनचोपलभ्यो भवेच्छब्दः ।
नापितदीया वरणंतस्मान्नास्ती तिजन्यःस्यात् । १७ ।

नानुपलब्धिर्भाव ग्राहकमर्यादयानलभ्यासौ । तस्मादा
वरणंस्यात्तत्वेतत्वेऽपिकिंतन्नो । १८ ।

मैवंयुक्तंतस्यास्तथात्वमेवभावेभ्यः । भिन्नत्वादा
वरणंभावस्तस्मात्तथा युक्तम् । १९ ।

सू०—अनुपलम्भात्मकत्वा दनुपलब्धे रहेतुः । २१ ।

त०—वेद्यत्वं सकलानां प्रत्यक्षंविद्यतेयतस्तस्याः ।
अनुभवसिद्धेव्यर्थो जात्याऽयंनिह्नवोयथा भवताम् । २ ।

सू०—अस्पर्शत्वात् । २२ ।

नकर्म्मानित्त्वात । २३ ।

नाणुनित्यत्वात् । २४ ।

सम्प्रदानात ॥ २५ ॥

तदन्तरालानु पलब्धेरहेतुः । २६ ।

अध्यापनादप्रतिषेधः । २७ ।

अभ्यासात । २८ ।

नान्यत्वेप्यभ्यासस्योपचारात । २९ ।

अन्यदन्यस्मादनन्यत्वादनन्यदि त्यन्यताभावः । ३०

तदभावेनास्त्यनन्यता तयोरितरेतरा पेक्षासिद्धेः । ३१ ।

त० अस्पर्शत्वाच्छब्दो नित्यस्त्वाकाशवद्युक्तः ।
नैवंकर्म्मणिहेतो दृष्टौनकान्तगामिता यस्मात ॥ २१ ॥

समतो व्याप्तौदृष्टा यस्मात् परमाणु गामिता साध्ये ॥
व्यभिचाराद समोऽयंहेतुः प्रतिषेधने ततोनालम् । २२ ।

यदिसम्प्रदानमिवगोः शब्दस्योरी क्रियेत हेतुःस्यात् ।
स्थरतायां नेतुयु ॆमध्येतस्या दृशेःकाऽपि । २३ ।

अध्यापन मपि हेतुः स्थिरता सिद्धौ नपर्य्याप्तः।
तत्वेऽनुभवा भावात्साम्येऽनित्यत्व प्रक्रिया कृत्वात्। २४।

अभ्यासोऽपितथैवान्यत्वे प्यभ्यास शब्देन।
नानन्यत्वत एषस्तस्माद्वाच्यो नचास्तीति। २५।

अन्यसमासेऽनन्यः कस्मात्प्रति योगिनोऽपला पस्ते।
नैवंशब्दान्तरता कल्प्यातत्वेमतानुज्ञा। २६।

सू०—बिनाशकारणाऽनुपलब्धेः। ३३।

अश्रवणकारणा नुपलब्धेः सतत श्रवण प्रसङ्गः। ३३।

उपलभ्यमाने चानुपलब्धेरसत्वादन पदेशः। ३४।

पाणिनिमित्त प्रश्लेषाच्छब्दा भावेना नुपलब्धिः ३५

विनाशकारणानु पलब्धे श्चावस्थानेतन्नित्यत्व प्रसङ्गः। ३६

त०—नैव विनाशेहेतुः कस्यापि ज्ञानम धिरूढ़ः।
तेननिनित्यः कस्माच्छब्दो विज्ञायते विज्ञैः। २७।

अश्रवणेऽपि न हेतुर्विज्ञायतेनुविचारज्ञैः। नैवं सत-
तंश्रवणं प्रसज्यतेऽनु भवशालिज्ञैः। २८।

सन्तानोकिल पूर्वोविनाश्यते परत उत्पन्नात ।
अन्तिम शब्दे पूर्वः कारणमस्त्येवतन्नाशे २८ ।

सन्तानादिषुहेतुः संस्कारो घरिटकादि वृतिर्यः ।
पाणिनि मित्तविशेषे निरुध्यते सन्ततिस्ततः सोऽपि ३०

मन्यत एवच तस्या भिव्यक्ति वादिना पियदिन-
स्यात । कथमिव तेषांनाशाभावा न्नित्यत्ववारणं
भूयात । ३१ ।

सू०-अस्पर्श त्वादप्रतिषेधः । ३७ ।

विभक्त्यन्तरो पपतेश्चसमासे । ३८ ।

त०-समानाधिकर णयाच्छब्दो घराटास्थितो न
वक्तव्यः । अस्पर्शत्वे विहतिः संसर्गाज्जायतेतु शब्दस्य ३२

रूपादि कसन्देश श्चेच्छब्दः समधिगम्यते भवता ।
योऽयंतस्याविभागो रूपादिभ्यः कथंसस्यात ३३ ।

सू०-विकारादे शोपदेशात्संशयः । ३९

प्रकृति विवृद्धौ विकार वृद्धेः । ४० ।

न्यूनसमाधि कोप लब्धेर्विकाराणा महेतुः । ४१।

नाऽतुल्य प्रकृतिनां विकारविकल्पात् । ४२ ।

त०—अत्रविचारोऽप्यन्यः किंवर्णेषुच चोद्यंशब्दज्ञैः ।

आदेशोऽर्थविकारो भेदात्तन्त्रेद्विधादृष्टम् । ३४ ।

नान्वितत्तेहविकारेनसमंस्थानं तथाकरणम् । आविकारेण

समत्वादुक्ति विशेषेऽपितद्दृष्टेः । ३५ ।

आदेशेऽपिनिमित्तंतेनास्त्येवापि साधुतासिद्धिः ।

वर्ण समूहसमत्वात्प्रकृति विवृद्धावबृद्धेश्च । ३६ ।

नैवविकारोयुक्तःस्त्वादेशः किन्तुजन्यत्वे । नापिविकारा

तुल्यत्वादापि न हेतुतासम्यक् । ३७ ।

सू०—द्रव्यविकारे वैषम्यवद् वर्णविकार विकल्पः । ३४ ।

सू०—न विकारधर्मानुपत्तेः । ४४ ।

विकारप्राप्ता नामपुनरापत्तेः । ४५ ।

सुवर्णा दीनां पुनरापत्तेरहेतुः । ४६ ।

त०—हेतुविरहितः पक्षोजाति प्रतिदृष्टोऽपितत्रस्यात् ।

सोपिविकारो दृष्टोऽन्वयितामपि संस्थितोयस्मात् । ३८।

नैवंशब्देकल्प्यं द्रव्याविकारेंतुसमं द्रव्यंस्यात् । एक-विकारसमस्तेनान्यो वर्णोऽस्त्यवयवादिः । ३९ ।

पुनरापत्तिः कल्प्या चेष्टादौ नैवदृष्टासा । न सुवर्णेऽपिच भिन्नोजात्या यादिःक्वचिद्दृष्टः । ४० ।

सू०—नित्यत्वेऽविकाराद् नित्यत्वे चानवस्थानात ॥४७

नित्या नामतीन्द्रिय त्वातद्धर्म विकल्पाच्च वर्ण विकाराणाम प्रतिषेधः । ४८ ।

त०—नित्यत्वे न विकारो जन्यत्वेऽपिस्थितिर्नास्य। पक्षद्वयेऽपि विकल्प नमतं कुत्रापि चरितार्थं । ४१ ।

नित्यत्वेऽपि यथाणौ जातौ ग्राह्यत्व भेदोऽस्ति। अस्थायित्वे बुद्धिर्यद्वद्वर्णेषु चैवंस्यात् । ४२

सू०—अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विका-रोपपत्तिः । ४९ ।

विकारधर्मित्वे नित्यत्वा भावात् कालान्तरे विकारो पपत्तेश्चाप्रतिषेधः । ५० ।

प्रकृत्य नियमाद्वर्ण विकाराणाम् । ५१ ।

त०—विकृतेः सततत्व प्रातिलोम्पमिति तन्नो युक्तम् । कालान्तरे विकारों बुद्धितुल्यो मृदौनैव । ४३

यज्जातीया प्रकृतिर्यस्यन तस्यास्तु सप्रकृतिः । वर्णविकारे चैवंजात्या नियतिर्नवाच्यास्ति ॥ ४४ ॥

सू०—अनियमेनियमान्नानियमः । ५२ ।

नियमा नियमविरोधाद् नियम नियमाच्चाप्रतिषेधः।५३।

त०—अनियम एषचनियतो नानियमस्तेन वक्तव्यः । मैवंनियम समासेशब्दान्तरकल्पनायतो व्यर्था । ४५ ।

सू०—गुणान्तरापत्युपमर्दह्रासवृद्धि लेशश्लेषेभ्यस्तु विकारोपपत्तेवर्ण विकाराः । ५४ ।

त० आदेशेऽपि समत्वाद्विकारशब्दो विरुद्धोनः । गुण रूप भेद कृतितोह्रासाद्‌वृद्धेश्चलेशाच्च । ४६ । श्लेषाद्‌पिचादेशो भिन्नेवर्णेऽपिस्व प्रकृतेः । प्रकृति विशेषात्सा म्यं मत मेवंस्याद्विचारेण । ४७ ।

सू० तेविभक्त्यन्ताः पदम् ।५५।

तदर्थंव्यक्त्या कृति सन्निधावुपचारात्संशयः ५६

त० विभक्ति विशिष्टावर्णाः पद शब्देनोदितास्तद-
र्थत्वम् । जातिव्यक्त्या कृतिमुक्तं विप्रतिपन्नलोकैस्तु ४८

सू० या शब्द समूह त्याग परिग्रह संख्या बृद्ध्यु
पचयवर्ण समासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः ५७

नतद् वस्थानात् ।५८।

सू० सहचरणस्थान तादर्थ्य वृत्तमानधारण सामीप्य
योगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकट राजसक्तु चन्दन
गङ्गाशाटकान्न पुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ५९ ॥

त० वैशिष्ट्येण च जातेर्दृश्यन्त इति भवेत्सैव ।
सह चरणस्थिति बृत्तं तादर्थ्य मान धारणे योगः ।५०।

सामीप्यं साधनता स्वामित्वंचापि हेतुः स्यात् । गौणे
शब्द प्रयोगे साहित्याद् व्यक्तिगः शब्दः ।५१।

सू० आकृतिस्तदपेक्षत्वात्सत्वव्यवस्थान सिद्धेः ६०

व्याक्तयाकृतियुक्तेऽप्य प्रसङ्गात्प्रोक्षणादीनाम्मृद्गवके जातिः ॥६१॥

ना कृतिर्व्यक्त्यपेक्षत्वाज्जात्यभि व्यक्तेः । ६२ ।

व्यक्त्या कृतिजातयस्तु पदार्थः । ६३ ।

त० आकृति सत्व विशेष व्यवस्थितेर्हेतुतोभवेद्वाच्या । सा पिचजाति विशिष्टे द्रव्ये वाच्ये हि संसाध्या ॥ ५२ ॥

मृद्गवकेऽपिच जातिर्नास्तीत्थं नापि प्रोक्षणं दानम्
तस्माज्जातिर्वाच्या मैवं विशेष इह नास्ति । ५३ ।

आकृति सत्वेजातेर्व्यञ्जक भावेन सर्वदा सिद्धेः । जाति व्यक्तया कृतिपूक्तंत्वे वं समतया पदार्थत्वम् । ५४ ।

सू० व्यक्तिर्गुण विशेषाश्रयो मूर्त्तिः । ६४ ।

आकृतिर्जाति लिङ्गाख्या । ६५ ।

सामान प्रसवात्मिका जातिः । ६६ ।

त० व्यक्तिर्गुणादि युक्ता मूर्त्तिर्जातिश्च सामा-न्यम् । आकृति रस्या लिङ्गंत्रित यं शब्देन भास्यंहि । ५५ ।

इति निगदितमर्थन्यूनता पूरणार्थ मभिहित मिह भाष्ये यद् यथावच्च माने । विदधतु च परीक्षा शील ने नागमज्ञाः सन मपि नयमानं न्यूनतां पूरयित्वा । ५६ ।

इति श्री त्रिवेदि पण्डित हरिदत्त शर्मभिर्विराच-ताया द्वितीयाध्याय द्वितीयान्हिक तत्व सुधालहर्य्या श्चतुर्थ स्तरङ्गः समाप्तः ॥



जयति भुवन हेतु स्वात्म संकल्प कल्पः । प्रम-थित तरविघ्न व्रातसंभ्रांड वेद्यः । द्वयति मितमाना-त्मा वबोधेन मिथ्या । विलसित मखिलं यो मेय चैत्त स्वरूपः । १ ।

सू० दर्शन स्पर्श नाभ्यामेकार्थ ग्रहणात् । १ ।

सू० न विषय ब्यवस्थानात् । २ ।

सू० तद्ब्यवस्थाना देवात्मसद्भावादप्रतिषेधः ।३

त० माने परीक्षितं सर्वम् ।
मे यस्यास्ति क्रमोऽअधुना ।
शरीरादि विभिन्नोऽय ।
मात्मा पूर्वो न विग्रहः । २ ।

यमद्राक्षं तमेवाहं । स्पृशामी त्येक कर्तृकः । प्रत्य योन च संघात । कर्तृको नैक साधनः । ३ ।

रूपादि विषया दृष्टा एक साधन गोचरा नात्मा सर्वगतोऽस्त्यन्यः सर्व बुद्धेर भावतः । ४ ।

इन्द्रियाणां व्यवस्थाना द्व्यवस्था विषयेष्वतः ।
साधनाधीन सिद्धोऽयमात्माऽखण्ड्यः प्रतीतये । ५ ।

सू० शरीर दाहे पातका भावात् । ४ ।

देहाद्यात्मत्व स्वीकारे न देहः कर्म्मजो भवेत् ।
अकृता भ्यागमो दोषः पूर्व देहाद्यभावतः । ६ ।

शरीर नाशेनष्टं हि कर्म्म पूर्वम तोऽग्रिमम ।
कृतस्य नाशः प्राप्नोति तस्मादात्मा पृथङ्मतः । ७ ।

सू० तदभावः सात्मक प्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥

न कार्य्या श्रयकर्तृवधात् । ६ ।

सव्य दृष्टस्ये तरेण प्रत्यभि ज्ञानात् । ७ ।

त० आत्मा नित्यो न पापं स्याद्धं सकस्येत्य साम्प्रतम् ।

अवैध दुःख हेतु त्वान्मरणं पापं साधनम् । ८ ।

कार्य्या अपः कर्तृवधो न कर्तृ रूपतोमतः । नेन्द्रियाण्यात्म रूपाणि वामे सव्यदृशः स्मृतेः । ६ ।

सू० नैकस्मिन्ना सास्थिव्यवहि ते द्वित्वाभिमानात् । ८ ।

त० नासास्थि व्यवधानेन च क्षुरेकं द्वयंभवेत् । चक्षुषः पीडनादेको यथाद्वेधा सुधा करः । १० ।

सू० एकविनाशेद्वितीया विनाशान्नैकत्वम् ॥ ६ ॥

अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥

दृष्टान्त विरोधादप्रतिषेधः ॥ ११ ॥

त० एक नाशेनकारणत्व मन्धत्वञ्च विविच्यताम् । नैवमेकस्य देशस्यनाशे देशान्तरास्थितेः ॥ ११ ॥

एकावयविमतं न्यूनं श्वारीदतं शृणु साम्प्रतम् ॥ भिन्नस्त्वयैवमन्योऽपि स्वीकृतः किन्तुकल्पितः ॥ १२ ॥

निरर्थकश्चाप्रमाणकल्प्योवयवीन्द्रियमित्य हो त्रयेण द्वितयंगृह्णन्नेकवक्ता क्रयेपटुः ॥ १३ ॥

सू० इन्द्रियान्तर विकारात ॥ १२ ॥

त० एवंभिन्नेन्द्रियैर्दृष्टस्यो पघाते कथंस्मृतिः ॥ नदेवदत्तकान्ता या यज्ञदत्तैः स्मृतं सुखम् ॥ १४ ॥

सू० नस्मृतेः स्मर्त्तव्यविषयत्वात १३ ॥ तदात्म-गुणसद्भावाद प्रतिषेधः १४ ॥ अपरिसंख्यानाच्चस्मृति विषयस्य ॥ १५ ॥

त० विषयासन्निधानेऽपि स्वात्मप्रत्ययगा स्मृतिः संस्कारकारणत्वेऽपि स्वाश्रया दात्म साधिका १५॥ स्मर्त्तव्यविषयाचिन्ते त्युक्तिर्ज्ञातुर्नवारिका यमहंपूर्वमद्राक्ष-मिति मात्रादिसंस्मृते : ॥ १६ ॥

सू० नात्मप्रतिहेतूनां मनसि सम्भवात् ॥ १६ ॥

ज्ञातुर्ज्ञानसाधनोप पत्तेःसंज्ञा भेदमात्रम् ॥ १७ ॥ मनस्त्वेकंभवेत्कर्त्तृनकर्त्तृत्वंहि साधने विरोधाद्भिन्नकर्त्तृत्वे संज्ञाभेदो न बाधकः ॥ १७ ॥

सू० नियमश्च निरनुमानः ॥ १८ ॥

त० वहिर्व्यासक्त चित्तस्य ज्ञानाभावेनसाधकं सुखोपलब्धि व्यापार स्साधनस्यच साधकः ॥ १८ ॥

सू० पूर्वाभ्यस्तस्मृत्यनु वन्धनात् जातस्यहर्षभयशोक सम्प्रतिपत्तेः ॥ १६ ॥

त० जातमात्रस्य हर्षादिचेष्टयानु मितांहियत पूर्वाभ्यस्तस्मृतेस्तच्च स्वात्मानत्यत्वसाधकम् ॥ १६ ॥

सू० पद्मादिषु प्रवोधसम्मीलन विकारवत्तद्वि-कारः ॥ २० ॥

नोष्णशीतवर्षाकालानिमित्तत्वात् पञ्चात्मकविका-राणाम् ॥ २१ ॥

प्रेत्याहाराभ्या सकृतात् स्तन्याभिलाषात् ॥ २२ ॥

त० यथोत्पलादि हर्षाद्यभावेतन्निमीलनं विकासश्च बिकारः स्यादेवं चेष्टा स्वयंभवेत् ॥ २० ॥

नैवंभूतविकाराणां कालोहेतुःस्वतोनुते शरीरचेष्टा हर्षादेर्न स्वतोमूलसाधिका ॥ २१ ॥

प्रेत्याहारकृताभ्या सात्स्तन्येच्छा तेनचेष्टनम् तथा-
भूतकुमारस्य जन्म संसाधयेदिदेम् ॥ २२ ॥

सू० अयसोऽयस्कान्ताभिगमनवत्तदुपर्सणम्॥२३॥

त० अयस्कान्तेऽयसो यद्वच्चेष्टनं नुपपयोधरे नानि-
मित्तमतः क्लृप्तनिमित्ता देव जायताम् ॥२३॥

सू० नान्यत्र प्रवृत्त्य भावात् ॥२४॥

वीतरागजन्मा दर्शानात् ॥२५॥

त० पादेऽप्रवृत्तितो राग आगन्तुक इवास्थितः
जन्म संसाधयेत्पूर्वम भावाद्वीत रागिणाम् ॥२४॥

सू० सगुणद्रव्योत्पात्ति वत्तदुत्पत्तिः ॥२६॥

न संकल्प निमित्तत्वा द्रागादीनाम् ॥२७॥

द्रव्यस्प सगुणस्येव कुतोनात्म जनिर्भवेत् क्लृप्त
संकल्प जन्पत्व त्यागापत्ते र्न यौक्तिका ॥२५॥

सू० पार्थिवं गुणान्तरोपलब्धेः ॥२८॥

श्रुति प्रामाएयात् ॥२६॥

त० आत्मनोनन्तरं देहस्तस्य ज्ञानादिकाश्रयः पार्थिव स्सच तन्मात्रगुणवत्त्वान्न पञ्चजः २६ ॥

पृथिवींति शरीरं यच्छ्रूयते प्रलयश्रुतौ स्तृणोमीति- विकारस्य चोत्पत्तावपि दृश्यते ॥ २७ ॥

सू० कृष्णसारेसत्यु पलम्भाद्व्यतिरिच्य चोपलम्भात् संशयः ॥ ३० ॥

त० आश्रयव्यतिरिक्तानि नेन्द्रियाणीति साम्प्रतं कृष्णसाराद्यन्वयेन चाक्षुषादि प्रतीतितः ॥ २८ ॥

सु० महदणु ग्रहणात् ॥ ३१ ॥

रश्म्यर्थ सन्निकर्ष विशेषात्तद्ग्रहणम् ॥ ३७ ॥

त० तन्नव्याप्त ग्रहात्स्थूल सूक्ष्मादेर्ग्रह दर्शनात् रश्मि संयोगतः सिद्धि राश्रयव्यत्तिरेकिणाम् ॥ २८ ॥

सू० तदनुपलब्धे रहेतुः ३३ ॥

त० रश्मे स्तैजसतायां स्यात्प्रत्यक्षं रूपवत्तयाना- रूपितैजसं तस्मादभाव इतिसाम्प्रतम् ॥ ३० ॥

सू० नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभाव-हेतुः ॥ ३४ ॥

द्रव्यगुणधर्म्मभेदाच्चोपलब्धि नियमः ॥ ३५ ॥

त० उपलम्भे विशेषोहि वैधर्म्यादुपपद्येत नानुमेयस्य प्रत्यक्षाभावतोऽसत्वमुच्यताम् ॥ ३१ ॥

सू० अनेकद्रव्य समवाया द्रूपविशेषाच्च रूपो-पलब्धि ॥ ३६ ॥

कर्म्मकारितश्चेन्द्रियाणां व्यूहःपुरुषार्थ तन्त्रः ॥ ३७ ॥

त० महत्वं रूपवैजात्यमनेकद्रव्यवत्तया प्रयोजकंहि प्रत्यक्षेऽनुद्भूतोनोपलभ्यते ॥ ३२ ॥

पुरुषार्थतन्त्रतः पूर्वकर्म्मणः करितश्चसः । व्यूहोवैजात्यमाश्रित्य साधनानां पृथक् पृथक् ॥ ३३ ॥

सू० अव्यभिचाराच्च प्रतीघातो भौतिक धर्म्मः ॥ ३८ ।

त० नाभौतिकानि सामान्य एषोऽर्थोऽपि न सिद्धयाति प्रतिघातेन काचादौ दीपाद्य प्रतिघातवत् ॥ ३४ ।

पार्थिवस्य प्रतीघातो व्याप्तो धर्म्मस्ततो नतत
तैजसत्वेनबाधोऽस्ति तस्माच्चक्षुस्तु तैजसम् ॥३४॥

सू० मध्यान्दिनोल्काप्रकाशानु पलब्धि वत्तदनु
पलब्धिः ॥३९॥

न रात्रावप्यनुपलब्धेः ॥४०॥

त० मध्यान्दिने यथोल्कायाः प्रकाशोनोपलभ्मत
पराभिभूतता हेतोरेवंस्यादितियुज्यते ॥३६॥

लोष्ठादेःसप्रकाशत्वं नैवंशङ्कितुमर्हसि, रा त्रावप्यु
पलब्ध्यादे राप्तेरितरत्रते ॥ ३७ ॥

सू० बाह्यप्रकाशानुग्रहाद्विषयो पलब्धेरनभिव्यक्ति-
तोऽनुपलब्धिः ॥ ४१ ॥

त० बाह्यप्रकाशसाहाय्यात्तथोद्भूतस्वरूपतः चक्षुषो
ग्राहकत्वंनानुद्भूतस्य प्रकाशनम् ॥ ३८ ॥

सू० अभिव्यक्तौ चाभिभवात ॥ ४२ ॥

त० नाभिभूतत्व मेवं स्यादुद्भूतस्याप्रकाशनात
कल्पतेऽभिभवोनान्य योग्येतस्या प्रयोजनात ॥ ३९ ॥

सू० नक्तञ्चरनयनरश्मिदर्शनात् ॥ ४३ ॥

त० नक्तञ्चराणांदृष्टश्चाक्षुषोरश्मिरस्तिहि कर्म्म-त्वात्रादृश्यतातु तद्भेदेनैव बाध्यताम् ॥ ४० ॥

सू० अप्राप्यग्रहणं काचाभ्र पट लस्फटिकान्तरितो-पलब्धेः ॥ ४४ ॥

न कुडयान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥

त० चक्षुरप्राप्तकारिस्यात्काचाभ्रान्त रितस्यहि, दर्शनं नोपलभ्येत प्राप्यकारिमतेयतः ॥ ४१ ॥

नैवमप्राप्यकारित्वे कुडयान्तरितदर्शनं वारयेत्कस्ततः प्राप्य प्रकाशो मन्यतां ध्रुवम् ॥ ४२ ॥

सू० अप्रतिघातात्सन्निकर्षोपपत्तिः ॥ ४६ ॥

आदित्यरश्मेःस्फटिकान्तरेऽपिदाह्येऽविघातात् ४७

त० काचाभ्रपटलादेस्तु प्रतिघातेऽस्त्वहेतुता भास्का-रस्यापिदाह्यगुमानंकाचेनहन्यते ॥ ४२ ॥

सू० नेतरेतरधर्म्म प्रसङ्गात् ॥ ४८ ॥

आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपो पलब्धिवत्तदु-
पलब्धिः ॥ ४९ ॥

त० नवा परस्परं धर्म्म भेदशंङ्कात्र युज्यते आदर्शे-
सुमुखंदृष्टं कुडयेनेति भिदायथा ॥ ४३ ॥

सू० दृष्टानुमितानांनि योगप्रतिषेधानुपपत्तिः॥५०॥

त० न कल्पना पदार्थानां साधिका किन्तुदर्शनात
यथा पदार्थ ज्ञानस्य याथार्थ्यमवधार्य्यताम् ॥ ४४ ॥

सू० स्थानान्यत्वेनाना त्वा दव यविनानात्वाद वय
विनाना स्थानत्वाच्च संशयः ॥ ५१ ॥

त्वगव्यतिरेकात ॥ ५२ ॥

त० भिन्नाश्रयोऽप्यनेकोऽत्रदृष्टश्चैको यथाघटः त्वगे-
काव्यतिरेकातस्यान्मैव मन्यस्य दर्शनात ॥ ४५ ॥

अवयवो देशभेदेन तस्यैवान्धो यथात्वन्धः चक्षुस्थ-
धूम विज्ञानहेतुता पादयोर्नहि ॥ ४६ ॥

सू० नेन्द्रियान्तरार्था नुपलब्धेः ॥ ५३ ॥

त० मैवैकस्यचान्यस्य कल्पनं नहियुज्यते, यौगं-पद्यंप्रतीनाञ्च प्राप्नोत्येकत्ववादिनः ॥ ४७ ॥

सू० त्वगवयव विशेषेण धूमोपलब्धि वत्तदु-पलब्धिः ॥ ५४ ॥

त० आश्रया युक्तरूपादि ग्राहकत्वं त्वचोभवेत् प्राप्तस्पर्शादि बोधश्च विरोधा पत्तितः कथम् ॥ ४८ ॥

सू० व्याहतत्वादहेतुः ॥ ५५ ॥

त० इन्द्रियार्थस्य पञ्चत्वात्साधने नियतत्वतः भिन्नानांसाधनत्वेहि एकोऽन्योप्राप्रकल्प्यताम् ॥ ४९ ॥

सू० न युगपदार्था नुपलब्धेः ॥ ५६ ॥

विप्रतिषेधाच्च नत्वगेका ॥ ५७ ॥

त० नतदर्थवहुत्वात्स्यात् पञ्चत्वमितिमावद जाति-तोनियतिः कार्य्या साधनार्थ विभेदतः ॥ ५० ॥

गन्धत्वाव्यतिरेकात्स्याद्गन्धो घ्राणस्य गोचरःनतदर्थ-वहुत्वं मेत्तातिंकाञ्चित्स्करोतिहि ॥ ५१ ॥

सू० इन्द्रियार्थपञ्चत्वात ॥ ५८ ॥

न तदर्थ वहुत्वात ॥ ५६ ॥

गन्धत्वाद्यव्यतिरेकाद्गन्धादीनाम प्रतिषेधः ॥६०॥

विषयत्वाव्यतिरेका देकत्वम ॥ ६१ ॥

न बुद्धिलक्षणा धिष्ठान गत्याकृतिजाति पञ्चत्वेभ्यः ॥ ६२ ॥

त० विषयत्वातसमस्तस्य पञ्चत्वमपि वाध्यताम्

जातिलक्षण बुद्धिनां गत्याकाराश्रयस्यच ॥ ५२ ॥

भेदादिन्द्रिय पञ्चत्वं विषयोत्रो पलक्षणम् भौतिकानीन्द्रियाणिस्युः भूता साधारणा गुणाः ॥ ५३ ॥

यतो गृह्यन्त एतैस्तुविशिष्या ऽनुमितिंक्रियाः

भूतानाञ्चगुणा गन्धोरसोरूपं स्पर्शश्चवाक् ॥ ५४ ॥

पृथिव्याः स्पर्शपर्यन्तःशब्द आकाशमात्रगः रसादयो

जलादीनां वातान्ता नाम पोहतः ॥ ५५ ॥

एकैकस्य क्रमाज्ज्ञेया गुणाः साधारणा अपि

स्वोत्तराद्वृत्तितो ज्ञेया असाधारण शब्दिताः ॥ ५६ ॥

सू० भूतगुणविशेषोपलब्धे स्तादात्म्यम् ॥ ६३ ॥

गन्धरसरूपस्पर्श सब्दानांस्पर्शपर्यन्ताः पृथिव्याः अप्ते जो वायूनां पूर्वं पूर्वमपोह्या काशस्योत्तरः ॥६४॥

न सर्व गुणा नुपलब्धेः ॥ ६५ ॥

असाधारणत्वे सिद्धे तत्तादिन्द्रिय गोचराः ते एव विनियोक्तव्या नसर्वे वृत्तितोऽपिहि ॥ ५७ ॥

त० जलादौ गन्धविज्ञानं संसर्गान्न निषिध्यते अन्वय व्यतिरेकेण विशेषोभूमि मात्रगः ॥ ५८ ॥

सू० एकैकस्यै वोत्तरोत्तरगुण सद्भावा दुत्तरोत्तराणां तदनुपलब्धिः ॥ ६७ ॥

संसर्गाच्चानेक गुणग्रहणम् ॥ ६८ ॥

त० विष्टमात्रतयारूपं पृथिव्यामितिमावद तैजसस्यैव मत्यन्त मेवन्नान्यस्यते भवेत ॥ ५६ ॥

सू० विष्टंह्य परं परेण ॥ ६६ ॥

न पार्थिवाप्ययोः मत्यक्षत्वात ॥ ७०

त० तस्मात्प्रधान विज्ञान मिन्द्रियेण हियुज्यते
भूयस्तया च प्राधान्यं गुणेषूक्तन्तुकर्मतः ॥ ६० ॥

सू० पूर्वपूर्व गुणोत्कर्षा त्तत्तत्प्रधानम् ॥ ७१ ॥

तद्व्यवस्थानन्तु भूयस्त्वात् ॥ ७२ ॥

त० गुणानामत्र वृत्तीनामाश्रय द्धारतोभवेत कारणत्वंततः स्वस्य न ग्रहो विरहात्स्वतः ॥ ६१ ॥

सू० सगुणानामिन्द्रि यभावात् ॥ ७३ ॥

तेनैवतस्या ग्रहणाच्च ॥ ७४ ॥

त० स्ववृत्तेः स्वस्यविज्ञानं नेतिव्याप्तिर्नयुज्यते स्वगामि शब्दाविज्ञानं श्रोत्रेणोरीकृतंत्वया ॥ ६२ ॥

नव्याप्तिः किन्तुतत्रास्तितर्नाहि शब्दस्य हेतुता द्रव्याणां धर्म्मभेदोहि यथादृष्टं प्रकल्प्यते ॥ ६३ ॥

इति निगदितमर्थान्तं प्रमेयं मुनीन्द्रैः मतिविशद-
विलासार्थं यथाभाष्य सूत्रम् आपिविषयविकासो बुद्धिहेतु

र्हियोग्यः अकृतनु हरिदत्तोऽपूर्वमेवं वितानम् ॥ ६४ ॥

इति श्री त्रिवेदी पण्डित हरिदत्त शर्मभि र्विरचि-तायां स्तृतीयाध्याय प्रथमान्हिकतत्त्वसुधालहर्यां: पञ्चम स्तरङ्गः समाप्तः--



गणेशोमनः कोशवेशो यथेच्छुः क्रियेच्छादि संकल्पपूर्वक्रमेण सदात्रिश्वबार्त्ताक्रिया जातकारी विधूनोति विघ्नान् महावातवेगः ॥ १ ॥

सू० कर्म्माकाश साधर्म्यात् संशयः ॥ १ ॥

त० क्रमाद्बुद्धिरस्पर्श वत्वाद्विवेच्यान जन्याभवेत्त्वं यथा कर्म्मजन्या मनोवाथ बुद्धिर्विदिर्वाऽपि सांख्यस्व सिद्धान्तभेदेन सान्दिह्यतेऽत्र ॥ २ ॥

सू० विषयमत्य भिज्ञानात् ॥ २ ॥

साध्य समत्वा दहेतुः ॥ ३ ॥

त० पुराप्रत्पाभिज्ञा यथा दृष्टमुक्ता प्रकाशो न चान्यः स्मरेदन्य दृष्टम् ।

ततःस्थायिनीचित्तरूपाहि बुद्धिर्नयुक्तं मतंहेत्वासिद्धेस्तुचित्ते ॥ ३ ॥

नचात्मानमाश्रित्य जातास्मृतिः सा मनः साधना

तत्रवृत्तिंकरोति तदन्येमनो व्यर्थमेवंतु तस्यनचात्म द्रयं ते प्रसिद्धे शरीरे ॥ ४ ॥

मतिश्चेतनाबुद्धिरेते च शब्दा नचार्थस्यभेदो यथा-व्याप्तिरूपा न चेत्त्वंस्मरन् दर्शयंश्चेतयन्स्या अनेकः कथते स्मृतिः पूर्वदृष्टे ॥ ५ ॥

सू० न युगपद् ग्रहणात् ॥ ४ ॥

त० त्वयेष्टा यथावृत्तिरन्यात दीया न चैवंभवेद्यौग पद्यंमतीनाम् अतीतस्मृतौचित्त नाशप्रसङ्गः क्रमेऽनेकता वाप्यतेबुद्धि चित्तैः ॥ ६ ॥

सू० अप्रत्य भिज्ञानेच विनाश प्रसङ्गः ॥ ५ ॥

क्रमवृत्तित्वाद् युग पद्ग्रहणम् ॥ ६ ॥

त० विनाशोऽपिचित्तस्य वृत्तोर्विनाशान्न चित्तस्य चान्यत्रशत्क्याऽग्रहःस्यात् स्थितेचित्त एकत्र चे शत्वमानी कथं विस्मृतः पूर्वजन्मर्णदानम् ॥ ७ ॥

सू० अप्रत्यभिज्ञानञ्च विषयान्तरव्या सङ्गात् ॥७॥

त० नचैकंहिवृत्त्यात्मभूतं मनः स्यात यतो वृत्तयो नैकरूपा मतास्ते नवा प्राप्त भावो विभुत्वे कदाचित्कथं सत्ववादी समस्ततत्व वित्ते ॥ ८ ॥

सू० न गत्यभावात् ॥ ८ ॥

स्फटिकान्यत्वाभिमानवत्त दन्यत्वा भिमानः ॥९॥

न हेत्वभावात् ॥ १० ॥

त० जपापुष्पनीलादि सान्निध्यमात्राद्यथास्फाटिके ऽन्यत्वमिथ्या प्रवाहः तथावृत्तिभित्थ्यावगाहो भयं हा न हेतुं विनोदाहृतेः साध कत्वम् ॥ ९ ॥

सू० स्फाटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्ती नाम हेतुः ॥ ११ ॥

त० परे सर्वभावं क्षणेजंवदन्ति ततः स्फाटिकान्यत्व सम्भावनाचेत सतीतन्ननैयत्यहेतोर भावा द्यथा दर्शनं-स्थैर्य्यनाशोऽभ्युपेयः ॥ १० ॥

सू० नियमेहेत्व भावाद्यथा दर्शनमभ्यनुज्ञा ॥१२॥

त० निमित्तात्तुदृष्टे यथा ह्रास वृद्धी समस्तस्य कार्य्यस्यवृद्धि स्तयेषु यतोहेतुभूते स्वभावेतयो स्तेन्नणेज स्त्वमाकस्मिकं स्यात्कथं ते ॥ ११ ॥

सू० नोत्पत्ति विनाश कारणोपलब्धेः ॥ १३ ॥

क्षीरविनाशे कारणो नुपलब्धिव द्ध्युत्पत्तिवच्च तदुपपत्तिः ॥ १४ ॥

त० यथाक्षीरनाशे ऽपिसद्धेतु र्वर्त्तिन चैवं सतः कारणं नोपलब्धम् दधिप्राप्ति लिङ्गान्मितं तत्रसत्वं न चान्यत्र तस्मान्न युक्तं ब्रवीषि ॥ १२ ॥

सू० लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १५ ॥

न पयसः परिणाम गुणान्तर प्रादुर्भावात् ॥ १६ ॥

त० ननाशः पररूप भेदो दधिस्यात्पयः प्राहुरेके ऽपितन्नैव युक्तं विनष्टे पुराणे नवे व्यूहजाते कथं कार्य्य सत्वंप्रकल्प्येत मन्ये ॥ १३ ॥

सू० व्यूहान्तराद् द्रव्यान्तरोत्पत्ति दर्शनं पूर्व द्रव्यानि वृत्तेरनुमानम् ॥ १७ ॥

त० पयोनाश दृष्टान्तमात्रान्न सिद्धिर्भवेत्स्फाटिकस्यापि हे तो रभावात न दृष्टान्तसत्ता प्यनुज्ञामतस्य ततो नक्षणे जत्व सिद्धान्त सिद्धिः ॥ १४ ॥

सू० क्वाचि द्विनाशकारणा नुपलब्धेः क्वाचिच्चोपलब्धेरने कान्तः ॥ १८ ॥

नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात ॥१९॥

त० नसाबुद्धि रिष्टेन्द्रियाणांविनाशे तदर्थस्मृतेरेव मुक्तंच पूर्वम् न चित्तस्यमत्या भवेद्यौगपद्यं स्मृतेस्तत्व तत्सर्वबोधा श्रयत्वात ॥ १५ ॥

सू० युगपज्ज्ञेया नुपलब्धेश्च न मनसः ॥ २० ॥

तदात्मगुणत्वेऽपितुल्यम ॥ २१ ॥

त० तदात्माश्रितत्वेऽपितौल्यं न शङ्क्यंमनः सन्निकर्षस्यभेदोऽत्रहेतुः नतत्स्याद्यदा कारणं दोषएषः प्रवाच्यस्ततस्तौल्यशङ्का न तस्य ॥ १६ ॥

सू० इन्द्रियैर्मनसः सन्निकर्षाभावात तदनुत्पत्तिः २२॥

नोत्पत्तिकारणा नुपदेशात ॥ २३ ॥

त० विनाशेऽपिहेतोर्भवेत्तुल्यभावो ननाशोभवेच्चेत-सश्चात्मनश्च विनाशोऽपिनोपेयते नित्यतैवं भवेज्ज्ञानमात्रस्य दोषस्समोऽयम् ॥ १७ ॥

सू० विनाश कारणानुपलब्धेश्चावस्थाने तन्नित्यत्व प्रसङ्गः ॥ २४ ॥

त० परंबुद्धि नाशे भवेदुत्तरासापिहेतुर्यथा दर्शनं कल्पनीयम् यथाशब्दतः शब्दनाशस्तरङ्गे विभुत्वाद्दतस्त-द्वदात्मन्यपीष्टम् ॥ १८ ॥

सू० अनित्यत्वग्रहाद्बुद्धेर्बुद्ध्यन्तराद्विनाशःशब्दवत २५

ज्ञानसमवेतात्मप्रदेश सन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न-युगपदुत्पत्तिः ॥ २६ ॥

त० प्रदेशेक्वचिज्ज्ञानसंस्कार सत्तामतं तत्रचित्तं स्मृतेर्हेतुमाह परोयस्तुतन्नैवमुक्तं शरीरान्तराचित्त वृत्तिर्वहि स्तन्नगच्छेत ॥ १९ ॥

सू० नान्तः शरीरवृत्तित्वान्मनसः ॥ २७ ॥

साध्यत्वादहेतुः ॥ २८ ॥

त० कथम्वानवाह्ये स्वरूपा प्रसिद्धिः भवेद्यावदात्राथ-चित्तं स्मरंस्ते गतं दूरदेशे शरीरं धरन्कः कथं भूमिदेशेन लुराठन्ब्रवीषि ॥ २० ॥

सू० स्मरतः शरीर धारणोपपत्तेर प्रतिषेधः ॥२६॥

नतदाशुगतिमत्वान्मनसः ॥ ३० ॥

त० नचाशु प्रवाहेन चित्तस्य कार्य्यं द्वयं साधितु शक्यते तेनियत्या स्मृतौकालनै यत्यदृष्टिर्नचेति त्वयापीह यानैववस्तुप्रसाध्यम ॥ २१ ॥

सू० न स्मरणकालानियमात् ॥ ३१ ॥

आत्मप्रेरण यदृच्छाज्ञताभिश्च नसंयोगविशेषः ॥ ३२॥

त० न दूरेमनोयोग सिद्धिर्ज्ञताया यदृच्छात्मकृत्या पिवाच्येतितुल्यम शिरः सौख्यकाले समासक्तचित्तस्य पादेव्याथायां तथा दृष्टतौल्यम् ॥ २२ ॥

सू० व्यासक्तमनसः पादव्यथनेन संयोग विशेषेण समानम् ॥ ३३ ॥

प्रणिधानलिङ्गादि ज्ञानानामयुग पद्भावाद्युगपद् स्मरणम् ॥ ३४ ॥

त० मनः सन्निकर्षस्य सत्वेस्मृतौतु यदान्येऽपि-लिङ्गादयोहेतुभूताः तदायौगपद्यंस्मृतौनैवशङ्क्यं न वा प्रातिभस्येव तद्दोषपातात् ॥ २३ ॥

परंप्रातिभेऽप्यास्तिकर्मोपभोगःफलेहेतुता यौगपद्यं ततो न विनाहेत्वदृष्टंच दृष्टं न वा साधनप्रक्रमें हेतुभावेपि हेतुः ॥ २४ ॥

मनोदेशगाम्यस्ति यस्यास्यतत्र नुदेशोस्थितस्यै कदास्मृत्यभावः कथम्बारणीयो भवेदक्रमोयोग संस्कार-योर्येनतुल्यः प्रक्रमः ॥ २५ ॥

सू० प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्य प्रसङ्गः ॥ ३५ ॥

त० मतिश्चेतनाधर्म्म एकोऽथरागस्तथाद्वेषकृत्यादि-
चित्तस्यसाङ्ख्ये। नतद्यौक्तिकंचेष्टया ज्ञानसाथानरागादयो
लोकसिद्धाविखराड्या: ॥ २६ ॥

सू० ज्ञस्येच्छाद्वेषनिमित्तत्वा दारम्भनिवृत्त्योः ३६॥

त० सामानाधिकरण्येनकारणत्वेविनिश्चते । भूतेषु-
विज्ञताप्राप्ता चेष्टायास्तत्रदर्शनात ॥ २७ ॥

सू० तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रति-
षेधः ॥ ३७ ॥

परश्वादिष्वारम्भनिवृत्ति दर्शनात् ॥ ३८ ॥

त० शरीरस्यनविज्ञत्व वाणांवत्परतन्त्रता । न चवं-
मृदिकुम्भादौ व्यभिचारादहेतुता ॥ २८ ॥

सू० कुम्भादिष्वनुपलब्धेरहेतुः ॥ ३९ ॥

त० प्रयोजकेच्छाद्वेषादिप्रयोज्येतु प्रवर्त्तकम् । ततो
न दूषणं भेदान्नियमानियमैरिह ॥ २९ ॥

सू० नियमानियमौतुतद्विशेषकौ ॥ ४० ॥

यथोक्तहेतुत्वात पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ४१ ॥

परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४२ ॥

त० परश्वादिषुदृष्टापिप्रवृत्ति स्त्वन्यधर्म्मतः सोनुमानं शरीरेऽपिनातश्चेतनमिष्यताम् ॥ ३० ॥

यथोक्तहेतुतश्चित्तेसाधनत्वान्नविज्ञता। अकृताभ्यागमाच्चैवदेहादेरपिवारिता ॥ ३१ ॥

पारिशेष्याद्यथोक्तानां हेतूनामुपपत्तितः आत्मनश्चेतना युक्तास्मृतिस्तस्यैव साम्प्रतम् ॥ ३२ ॥

सू० स्मरणन्त्वात्मनोज्ञस्वाभाव्यात ॥ ४३ ॥

त० प्रणिधानंनिबन्धश्चाभ्यासलिङ्गेचलक्षणम् । परिग्रहश्चसादृश्यमाश्रया श्रयियोगिता ॥ ३३ ॥

आनन्तर्य्यवियोगैककार्य्यत्वानिविरोधिता प्राप्तिश्चातिशयःसौख्यं दुःखंच व्यवधानता ॥ ३४ ॥

इच्छाद्वेषौ भयार्थित्वेक्रियारागोऽप्यदृष्टकम् । निमित्ता निस्मृतौयस्मा देकज्ञानेऽपरस्मृतिः ॥ ३५ ॥

सू० प्रणिधाननिबन्धाभ्यासलिङ्गलक्षण सादृश्य परिग्रहाश्रयाश्रितसम्बन्धानन्तर्य्यवियोगैक कार्य्यविरोधातिशयप्राप्तिव्यवधान सुखदुःखेच्छाद्वेषभयार्थित्व क्रियारागधर्म्मा धर्म्मनिमित्तेभ्यः ॥ ४४ ॥

त० बुद्धिर्मताकर्मवदेवजन्या क्षणेविनाशिन्यपिनान्यथा स्यात स्मृतिःसदा दृष्टवरे पदार्थे जीवन्न पश्यञ्जनकोऽपिचिन्त्यते ॥ ३६ ॥

क्षणेचबुद्धौसकलग्रहस्या व्यक्तैवनांपद्यतएवनूनम् ।
सौदामिनीपातइवागतोमे कान्ताप्रियालोकनकाकतालः॥३७॥

सू० कर्म्मानवस्थायिग्रहणात ॥ ४५ ॥

बुद्ध्यवस्थानात प्रत्यक्षत्वे स्मृत्यभावः ॥ ३६ ॥

अव्यक्तग्रहणमनवस्थायित्वात विद्युत्सम्पाते रूपाव्यक्त ग्रहणवत ॥ ४७ ॥

त० न बुद्धिहेतुः किलवित्तिभेदो निमित्तभेदादपिभास्करादेः सामान्यवैधर्म्म्य भिदाप्रकाशोव्यक्तस्तथाव्यक्त तयोपदेश्यः ॥ ३८ ॥

सू० हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४८ ॥

त० क्षणेक्षणे नूतनजायमाना ज्वालाप्रदीपस्य परप्रकाशा व्यक्तैव सर्वस्य विशेषरूपेणालोकिता तेकथमत्रमोहः ॥ ४६ ॥

सू० प्रदीपार्चिः सन्तत्याभिव्यक्त ग्रहणवत्तद्ग्रहणम् ॥ ४६ ॥

त० सैषाशरीरेजड आत्मकारिता गन्धोजलेयद्वदिहा स्तिमान्या द्रवत्ववद्वा स्वगुणोऽपिसंशयः प्रधानवस्तुन्यपिपेषणाय ॥ ४० ॥

सू० द्रव्ये स्वगुण परगुणो पलब्धेः संशयः ॥५०॥

त० शरीरस्यगुणाः सर्वेयाव द्व्यगतामताः । अयावद्द्व्यभावित्वाच्चेतना नहितद्गुणः ॥ ४१ ॥

संस्कारोनोदनाजन्यो द्रव्यान्तरगता ततः । तद्वच्चचेतनावाच्या तथा सत्यात्मगा भवेत् ॥ ४२ ॥

सू० यावच्छरीरभावित्वा द्रूपादीनाम् ॥ ५१ ॥

न पाकजगुणान्तरोत्पत्तेः ॥ ५२ ॥

त० पाकजाः परमाणौ स्युर्यथानैमित्तिका स्तथा
शरीरस्य न चैतन्यं वैषम्या दविरोधतः ॥ ४३ ॥

सू० प्रतिद्वन्द्विसिद्धेः पाकजानाम प्रतिषेधः ॥५३॥

त० शरीरस्यचेतना वत्त्वेज्ञानिनोवहवोमताः ।
एकत्रदेहेकृत्यादौ रणः स्यात्सर्वदाततः ॥ ४४ ॥

सू० शरीरव्यापित्वात ॥ ५४ ॥

केशनखादिष्वनुब्धेः ॥ ५५ ॥

त० व्यापित्वंनैवहेत्वास्ते केशादावप्यभावतः ।
मैवंत्वगन्तदेहोऽयंकेशादिष्वप्रसङ्गतः ॥ ४५ ॥

सू० त्वक्पर्य्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥ ५६ ॥

सू० शरीरगुणवैधर्म्यात ॥ ५७ ॥

न रूपादीनामितरेतरवैधर्म्यात ॥ ५८ ॥

त० शरीरगुणवैधर्म्याच्चेतना नहितद्गुणः । ननुरूपा-

दिषूद्भूतंवैधर्म्यंहि परस्परम् ॥ ४६ ॥

मैवमैन्द्रियकत्वंहि तुल्यंहेतौ स एवतु नचेतनाविधर्म्म त्वंतस्यैवहिं विपर्य्यात् ॥ ४७ ॥

सू० ऐन्द्रियकत्वा द्रूपादीनामप्रतिषेधः ॥ ५६ ॥

त० ज्ञानादनन्तरंचित्तं तच्चैकंदेहसंस्थितम् अयौगपद्याज्ज्ञाना नामेकस्या णोः प्रसाधनात् ॥ ४८ ॥

सू० ज्ञानायौपद्या देकंमनः ॥ ६० ॥

न युपदनेकक्रियोपलब्धेः ॥ ६१ ॥

त० एकोऽनेकक्रियाकारी यौगपद्ये न दृश्यते अलातचक्रवद्दृष्टिर्गौणाप्यत्रोप पद्यते ॥ ४६ ॥

सू० अलातचक्र दर्शनवत्तदुपलब्धिराशु संचारात ॥ ६२ ॥

यथोक्तहेतुत्वाच्चाणु ॥ ६३ ॥

त० अतोऽणुतापितस्यस्याद् मनोदेहेप्रवृत्तिमत् देहः पूर्वकृताभ्यस्तानु वन्धाज्जायतेकिल ॥ ५० ॥

सू० पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६४ ॥

भूतेभ्यो मूर्त्युपादानवत्तदुपादनम् ॥ ६५ ॥

त० भूतेषुमूर्त्युपादानं विनैवात्रावलोक्यते कर्म्मणा

तो न हेतुः स्यात्तस्यनेतिन युज्यते ॥ ५१ ॥

साध्य तुल्य त्वमत्रापि सर्वकर्म कृतंजगत समष्टि-

कर्म्मजातेन फलंव्यष्टयो पभुज्यते ॥ ५२ ॥

सू० न साध्यसमत्वात् ॥ ६६ ॥

नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६७ ॥

त० दृष्टान्तो विषमश्चात्रलोहितादि क्रमाज्जनिः

देहस्यच तथाहारस्याप्तिवैचित्र्यमत्रतु ॥ ५३ ॥

सू० तथाहारस्य ॥ ६८ ॥

प्राप्तौचानियमात् ॥ ६९ ॥

त० मारः सर्वप्रियासङ्गकारः सारापकर्षकः फलाव-

लोकेबन्ध्योऽयंकिंशुका इववोमताः ॥ ५४ ॥

किन्तुप्राप्तिःसुतालोकाल्हादधर्म्मस्य संश्रयात् तस्मा-

च्छरीरंतत्रापिभोगः कर्म्मकृतोमतः ॥ ५५ ॥

सू० शरीरोत्पत्तिनिमित्तवत संयोगोत्पत्तिनिमित्तं कर्म्म ॥ ७० ॥

त० अतोनानियमोयस्तु दोषोऽकर्म्म निमित्तिनाम्। सर्गे समुक्तः सुज्येत सत्वं कर्म्म कृतंकिल ॥ ५६ ॥

सू० एतेनानियमः प्रत्युक्तः ॥ ७१ ॥

उपपन्नश्चतद्वियोगः कर्मक्षयोपपत्तेः ॥ ७२ ॥

तदहृष्टकारितमिति चेत्पुनस्तत्प्रसङ्गोऽपवर्गे ॥७३॥

त० तस्यक्षयोवियोगोऽपि ज्ञायतेभोगशान्तितः । ना दर्शनंसाङ्ख्यसिद्धं कारणंमोक्षसिद्धये ॥ ५७ ॥

पुरुषार्थो व्यक्तसर्गो जातेर्थे तु वियुज्यताम् । गुणानां कारण त्वेन तत्प्रसङ्गो न वार्यते ॥ ५८ ॥

सू० न कारणाकारणयोरारम्भदर्शनात् ॥ ७४ ॥

मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः ॥ ७५ ॥

त० मनः कर्म्मनिमित्तत्वात्संयोगः केनवार्य्यताम्

प्रायणानुपत्तेश्च तथावन्धस्य नित्यता ॥ ५६ ॥

सू० नित्यत्वप्रङ्गश्च प्रायणानुपपत्तेः ॥ ७६ ॥

अणुश्यामता नित्यत्ववदेतत्स्यात् ॥ ७७ ॥

त० अणोस्तुश्यामता नित्या यद्वत्तद्वद्भवेदिदम मैवंतत्वाकृतापाभिदोषा पादन सम्भवात ॥ ६० ॥

इतिनिगदितमस्मिन् मानसंज्ञानयुक्तं सकलमनन-सिद्धिस्तेनचात्माविचिन्त्यः । मुनिरपिमुहुरे तद्बोधयन्पा-पठीति विशदमकृततत्वं तस्यचास्यांलहर्य्याम् ॥

शमयतु विषतापं भावदुःखानुतापं सकल भुवनपापं मानमिथ्याप्रलापम् । स्मृततरभिदमेकं गौत्तमार्थां नुसेक प्रचुरतर फलार्थं चित्तएका ग्रसौख्यम इतिशिवम्

इति श्री त्रिवेदि परिडत हरिदत्त शर्म भिर्विर-चिताया स्तृतीयाध्याय द्वितीया न्हिकतत्वसुधा लहर्य्याः षष्ठस्तरङ्गः समाप्तः ॥

---

सदा स दानवान् विघ्नान् द्व्यादव्याच्च सेवकान् ।
प्राणकोश मयः केश केशवाञ्चित षट्पदः ॥ १ ॥

सू० प्रवृत्तिर्यथोक्ता ॥ १ ॥

तथा दोषाः ॥ २ ॥

त० मानसानन्तरम्बोध्या प्रवृत्तिः पूर्वलक्षिता ।
दोषा अनन्तरन्तस्या स्तथैवेति विभाव्यताम् ॥ २ ॥

सू० तत्त्रैराश्यं रागद्वेषमोहार्थान्तर भावात् ॥३॥

नैकप्रत्यनीक भावात् ॥ ४ ॥

व्यभिचाराद हेतुः ॥ ५ ॥

त० लोभस्तृष्णा मत्सरश्च स्पृहारागदलेमताः ।
असूया मष मात्सर्य क्रोधेर्ष्या द्वेष पक्षगाः ॥ ३ ॥

प्रमादो विचिकित्साचमानम्मोहदलेभ्रमः । रागादि
प्रत्ययाभिन्नानैतेनोक्ता ततोभिदा ॥ ४ ॥

एकविज्ञान याथार्थ्य विरोध्येकेनभेदिता । मैवम्पाकज
रूपादौ व्यभिचाराद हेतुता ॥ ५ ॥

सू० तेषाम्मोहः पापीयान्नामूढस्येत्तरोत्पत्तेः ॥६॥

प्राप्तस्तर्हि निमित्त नैमित्तिक भावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥

न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥

त० दोषोपिमोहोमूलत्वाद्रागा देर्मुनिनाततः ।
दुःखेतिसूत्रेनिर्दिष्टः पृथक् पापतरोहिसः ॥ ६ ॥

मोहोदोष निमित्तत्वाददोष इतिचेन्नहि । भेदेहेतु-र्लक्षणस्या भेदात्तत्स्याद्घटादिवत ॥ ७ ॥

सू० निमित्त नैमित्त कोपपत्तेश्चतुल्य जातीया नामप्रतिषेधः ॥ ६ ॥

त० सजातीयनिमित्ताहि दृष्टालोके घटादयः ।
व्याप्तिर्नतर्क्यतेपक्षे त्वदीय इतरत्रसा ॥ ८ ॥

सू० आत्मनित्यत्वे प्रेत्यभावासिद्धिः ॥ १० ॥

त० ततस्तुजायते प्रेत्यभावस्तस्मादनन्तरः । जनिर्मृ-त्युश्चतद्रूपं नजीवे नित्यतायतः ॥ ९ ॥

जानिर्जीवेतुदेहादि सम्बन्धोनित्य गोभवेत। तद्विरोधि-

मृतिश्चात्रनित्यतातु प्रयोजिका ॥ १० ॥

सू० व्यक्ताव्यक्तानाम्प्रत्यत्त प्रमाराया त ।।११।।

नघटाद् घटानिष्पत्तेः ॥ १२ ॥

व्यक्ताद्घट निष्पतरेप्रतिषेधः ॥ १३ ॥

त० व्यक्ताद्व्यक्त न्नचाव्यक्तात्साङ्ख्यादे रपि-सम्मतम्। व्याप्तन्दृष्टंगुणादिर्हि नोपादानतयामतम् ।१.१।

न घटाद्घट निष्पत्तिर्मभून्नोबाधिकानसा । न ब्यक्तञ्जनकं सर्बब्यक्तजन्यन्ततस्तुभोः ॥ १.२ ॥

सू० अभावाद्भावोत्पत्तिर्नानुपमृद्यप्रादुर्भावात ।२४।

त० अभावोभावहेतुः स्यान्नानुपमृद्यजन्यतं । वीजादावङ्कुरश्चेतिप्राहुः केचिन्नयौक्तिकम् ॥ १.३ ॥

सू० ब्याघाताद् प्रयोगः ॥ २५ ॥

त० ब्याघाद्वचसोसिद्धे वक्तुर्जिह्वामुखेनहि । बिनाश्य कारणञ्जातो वन्ध्यायाः सुतएवसः ॥ २४ ॥

सू० नातीता नागतयोः कारक शब्दप्रयोगात ।२६।

त० विनाशानन्तरञ्जाते तज्जन्योपिहि कर्तृता ।
अजातपुत्रदुःखेन पितायंम्रियतेयथा ॥ २५ ॥

शाब्दिकैः कृतान्तकर्तृत्वमारोप्यापिहि साध्यते ।
नकुलालकपालानि त्रोट्यन्तेतार्किकैरिव ॥ १६ ॥

सू० नविनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥

क्रमनिर्देशाद प्रतिषेधः ॥ १८ ॥

त० न विनाशात्समुत्पत्तिः क्रमोयन्तु प्रदर्श्यते ।
त्वयापि वीजचूर्णेन नाङ्कुरोजन्यतेकचित ॥ १७ ॥

सू० ईश्वरः कारणं पुरुष कर्म्माफल्यदर्शनात ।१८।

न पुरुषकर्म्माभावेफलानिष्पतेः ॥ २० ॥

तत्कारितत्वादहेतुः ॥ २१ ॥

ईश्वरङ्कारणम्प्राहुः पुरुषस्याफलत्वतः । विवर्त्तोवाप्युपादेयंज्ञानस्यैतत्समन्वयात ॥ १८ ॥

त० अन्वयःपौरुषेदृष्टः तन्नियन्तेश्वरोभवेत् ।
जडोनचेतना जन्योनभ्रमोप्यवलोक्यते ॥ १६ ॥

सर्वज्ञोयोगसिद्धेन्द्रो न भ्रान्तोवाजडोभवेन् । अनुकूलसमस्तार्थः कोजानन्नथ नाभियात ॥ २० ॥

सू० अनिमित्ततोभावोत्पातिः कएटकतैक्ष्ण्यादिदर्शनात ॥ २२ ॥

त० स्वभाव वादिनः प्राहुरनिमित्ताद्भवेजानिं । कण्टादिकतैक्ष्ण्यंहि न दृष्टंकर्षकैः क्वचित ॥ २१ ॥

सू० अनिमित्त निमित्तत्वान्ना निमित्ततः ॥२३॥

त० अनिमित्त निमित्त त्वम्पञ्चम्या बोध्यते त्वया आत्मा श्रयात्स्वभावा न्नोकार्य्य जातस्यहेतुता ॥ २१ ॥

सू० निमित्ता निमित्तयोरर्थान्तरभा वादप्रतिषेधः ॥ २४ ॥

त० अनिमित्तस्यपञ्चम्या व्याघाताद्धेतुतानहि । प्रबोध्यते कमण्डल्वां नोदकन्नोदकं यथा ॥ २२ ॥

सू० सर्वमनित्यमुत्पाति विनाशधर्म्म कत्वात । २५ ।

त० अहोऽकर्मानिमित्तोयं संसारोभौतिकस्त्वया

साध्यतेपूर्वमुक्तस्तेह्य कृताभ्यागमः पुरा ॥ २३ ॥

सू० नानित्यतानित्यत्वात् ॥ २६ ॥

सू० तदनित्यत्व मग्रेर्दाह्यं विनाश्यानुविनाश-
वत्॥ २७ ॥

त० केचित्सर्वविनाशि त्वज्जन्यत्वा दपिवाजगुः ।
अनित्यमेव नात्रैवानित्यत्वे व्यभिचारितः ॥ २४ ॥

पुरान नित्यतासिद्धिः सिद्धौतत्रापिसाधिता । न
विश्राम्याति तत्रापिदाह्य नाश्याग्नि नाशवत ॥ २५ ॥

सू० नित्यस्याप्रत्याख्यानं यथोपलब्धि व्यवस्था-
नात् ॥ २८ ॥

त० नित्यानित्य विवेको हित्वयै वाविदितो यथा
दृष्टनाशोनित्यत्तायां नित्यंस्यात्तदभाववत ॥ २६ ॥

सू० सर्वन्नित्यम्पञ्च भूतनित्यत्वात ॥ २९ ॥

सू० नोत्पत्ति विनाशकारणोपलब्धेः ॥ ३० ॥

त० सर्वन्नित्यम्पञ्च भूतनित्यत्वा दितिचेन्मतम् ।

दृष्टदोषोत्रपूर्वस्य यथातेननिवर्तते ॥ २७ ॥

सू० तल्लक्षणाविरोधादप्रतिषेधः ॥ ३१ ॥

त० विनष्टेपिहिभूतः स्यात्तन्नित्यत्वाच्च नित्यता ।
लक्षणाद्वरोधात्स्या त्त्वनमतेर्ननि वर्तिता ॥ २८ ॥

सू० नोत्पत्तितत्कारणो पलब्धेः ॥ ३२ ॥

त० मैवङ्कार्य्यन्नहेत्वात्मा लीनमित्ये वनाशिता ।
नष्टसत्वंसांख्य वक्ते खण्डितं त्वाविरोधतः ॥ २९ ॥

स्वाप्निकस्यैव जाग्रत्स्यान्मिथ्येत्यापिन साम्प्रतम् ।
बाधकस्याप्यभावेचेन्मिथ्याकस्मान्नतेवचः ॥ ३० ॥

सू० न व्यवस्थानुपपत्तेः ॥ ३३ ॥

सर्वम्पृथक् भावलक्षणपृथक्त्वात् ॥ ३४ ॥

नानेकलक्षणैरेकभावानिष्पत्तेः ॥ ३५ ॥

लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥

त० अवस्थाधर्म्म कालादेर्भेदो द्रव्यन्तदेवहि ।
तदेवंसर्वमेवेदम्मेवन्धर्म्म प्रसङ्गतः ॥ ३१ ॥

कालादावपिसर्वोऽयं व्यवहारोविलुप्यते । घेऽन्या चूर्णितेनस्या दुदका हरणंत्तव ॥ ३२ ॥

समाख्याशब्दमात्रन्तु नानाभूतार्थबाचकम् । नैवमे-कस्यानिष्पतेः साधितोऽवयवीपुरा ॥ ३३ ॥

तदेवेदमत्रालोकि पूर्वेदृष्टामितिस्मृतिः । एकत्वेनव्य-वस्थाप्यानोचेदेका प्रसिद्धिता ॥ ३४ ॥

सू२ सर्वमभावोभावेष्वित्तरे त्तराभावसिद्धेः ।३७।

त० भावाःपरस्पराभावरूपाभावानतत्वतः । अपोह-रूपतो नान्यत्किञ्चिदवावबुध्यते ॥ ३५ ॥

परस्पररूपचाभावेऽभावत्वमनैवसिद्ध्यति । निरूपा-ख्यश्चसोपाख्य रूपतांसेवतेनाहि ॥ ३६ ॥

सू० न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

त० स्वभावसिद्धिर्भावानामन्यरूपनिषेधनम् । आसन्ना वात्मनाप्यश्वो तदात्मानेतिगीर्यतः ॥ ३७ ॥

सू० न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥

व्याहतत्त्वायुदक्रम ॥ ४० ॥

त० आपेक्षिकः स्वभावोऽयं ह्रस्वदीर्घे यथाद्वयम् ।
मैवंस्वरूपतःसिद्धेर्ह्रस्वत्वादिकबोधनात ॥ ३८ ॥

त० अपेक्षया प्रसिद्धस्यापेक्षातु नहियुज्यते ।
नापिह्रस्वत्वदीर्घत्वे चान्योन्याश्रयदूषणात् ॥ ३९ ॥

क्ष्रू० सर्वैकान्तासिद्धिः कारणा नुपत्त्युपपत्ति-
भ्याम ॥ ४२ ॥

सू० न कारणावयवभावात् ॥ ४२ ॥

सू० निरवयवत्वादहेतुः ॥ ४३ ॥

त० सर्वमेकंद्विधात्रेधा चतुर्धेत्यादिकास्तुये ।
संख्यैकान्ता न सिद्ध्यन्ति हेतुसत्ताद्यभावतः ॥ ४० ॥

पक्षस्यावयवोहेतुर्भवन्तरयापवर्गिता । विवादादेव-
दोषो यन्नतथा परिहीयते ॥ ४१ ॥

सू० सद्यः कालान्तरेचफलनिष्पतेः संशयः ।४४।

त० फलञ्जन्मोत्तरंवाच्यं क्रमाद्धेतुत्वसङ्गतः ।
द्वैविध्यत्तस्य संदेहः सद्यःकान्तरेऽथवा ॥ ४२ ॥

सू० नसद्यः कालान्तरोप भोग्यत्वात । ४५ ।

सू० कालान्तरेणानिष्पत्तिर्हेतु बिनाशात । ४६ ।

त० नसद्यो होम यागादेर्लौकिकवत्फलम्भवेत् ।
मुख्यार्थ स्वर्गप्राप्तिस्तु श्रुत्युक्तास्त्यन्यजन्मगा ॥ ४३ ॥

सू० प्राङ्निष्पत्तेर्वृत्तफलवत्तस्यात ॥ ४७ ॥

सू० नासन्नसन्नसद् सद् सत्सतोर्वैधर्म्म्यात ॥४८॥

त० विनष्टङ्कारणङ्कार्य्यं कथन्ते जनयेदपि।
नैवम्बीज प्रसेकादेर्वृत्तादौ द्वारतः फलम् ॥ ४४ ॥

सू० उत्पादव्ययदर्शनात ॥ ४६ ॥

सू० बुद्धिसिद्धन्तु तदसत ॥ ५० ॥

त० उपादानस्य नैयत्यान्ना सत्सदापिनोभवेत ।
उत्पत्तेर्नाप्य सत्सत्स्यात्फलम्वैं धर्म्म्यताद्वयोः ॥४५॥

त० उत्पाद व्ययतोऽसत्वेप्यास्ति बुद्ध्याफलार्थिनः ।
उपादानस्य नैयत्यंन्तत्र किम्बाध कंवद ॥ ४६ ॥

सू० आश्रय व्यतिरेकाद्वृत्त फलोत्पत्ति व दित्य हेतुः ॥ ५१ ॥

सू० प्रीते रात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥

त० सेक्तुःफलञ्च बृत्तस्यात्सामाना धिकरणयतः
आश्रयव्यातिरेकेऽपियागात्स्वर्गः कथम्भवेत ॥ ४७ ॥

ब० मैवम्प्रीतिकृतिर्याग: फलंस्वर्गश्च सम्भवेत् ।
आत्मन्येवतुतन्मन्ये सामाधिकरणयतः ॥ ४८ ॥

सू० नपुत्रपशु स्त्रीपरिच्छद हिरण्यान्नादि फल-
निर्देशात ॥ ५३ ॥

सू० तत्सम्बन्धात्फल निष्पत्तेस्तेषु फलवदुपचारः
॥ ५४ ॥

त० पुत्रम्पशुर्हिरण्यञ्च बस्त्रान्न ग्रामरूपतः । निर्दि-
ष्टं यत्फलङ्गौणञ्जन्य त्वात्प्रीतिरे वतत ॥ ४६ ॥

सू० बिबिधवाधना योगाद्दुःखमेवजन्मोत्पातिः ॥५५॥

त० फलस्यानन्तरन्दुःखन्तद्धानाय प्रयत्नतः । तत्व-
ज्ञानेऽभ्यस्यतः स्यात्सर्वदुःखम्बिवेकिनः ॥ ५० ॥

सू० न सुखस्यान्तराल निष्पत्तेः ॥ ५६ ॥

त० न सुखं सन्निषिध्येत सुख दुःख प्रवर्तनात् । चक्र
वत्किन्तु जन्मे दन्दुःखम्भावयतः सुखम ॥ ५१ ॥

सू० बाधनाऽनिवृत्तेर्वेदयतः पर्य्येषण दोषाद् प्रतिषेधः ॥ ५७ ॥

सुखम्भावयतो दृष्टम्मनो राज्यञ्च दुःखकृत ॥

त० प्रार्थिता प्राप्तितस्तत्सम्पाद्बाध नानिवर्तते ॥५२॥

सू० दुःख विकल्पे सुखाभिमानाच्च ॥ ५८ ॥

त० दुःख सुखाङ्ग भूतञ्चततो दुःखविकल्पिते । सुखस्यभावनंदुःखञ्जन्म सम्पादये दिदम् ॥ ५३ ॥

सू० ऋणक्लेश प्रवृत्यनुवन्धा दपवर्गाभावः ॥५९॥

त० दुःखम्भावयतः साध्योपवर्गस्तु न सम्भवी । ऋणक्लेश प्रवृती नामनुबन्धान्न शङ्क्य ताम् ॥ ५४ ॥

सू० प्रधान शब्दानुप पत्तेर्गुण शब्देनानुबादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥

त० ऋणादिशब्दो गौणोयन्नि न्दार्थ-तु विशेष्यते । सामर्थ्याधि कृतस्येह बोध्यते कर्म्म वैभवः ॥ ५५ ॥

त० अनार्थनोप्य शक्तस्य नाधिकारः प्रवर्त्तते । तद्राहित्यवतो बेदे कर्म्म त्यागोऽपि चोच्यते ॥ ५६ ॥

सू० अधिकाराच्च बिधानंबिद्यान्तरवत ॥ ६१ ॥

सू० समारोपणादात्मन्य प्रतिषेधः ॥ ६२ ॥

सू० सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ।६३।

त० तस्मादग्नि समारोपे भैक्षचर्य्या विधानतः एषणाभ्युत्थि तस्याथ कर्मपात्रचयान्तिमम् ॥ ५७॥

त० नोपपद्येत पौराणञ्चातुराश्रम्य मस्ति च । प्रमाण ब्राह्मणे नैवप्रमाणय प्रतिपादनात् ॥ ५८ ॥

त० ऋणा भावस्ततः क्लेशस्या प्यभावोभवेदिह। रागादि कारणा भावात्सुषु प्तौस्वाप्निकाद्यथा ॥५९ ॥

सू० न प्रवृत्तिः प्रतिसन्धनाय हीन क्लेशस्य॥ ६४॥

सू० न क्लेशसन्ततेः स्वाभाविक त्वात् ॥ ६५ ॥

त० हीन क्लेशप्रवृत्तिर्हिनरागायभवे दियम् । काय-व्यूहेन कर्म्माणि विपच्यन्तेतु योगिनः ॥ ६० ॥

सू० प्रागुत्पत्तेर भावानित्यत्व वत्स्वाभाविकेऽप्य-नित्यत्वम ॥ ६६ ॥

सू० अणुश्यामताऽनित्यत्ववद्वा ॥ ६७ ॥

सू० नसङ्कल्पनिमित्तत्वाच्च रागा दीनाम् । ६८ ।

त० अनादित्वेपिनाशित्वं क्लेशसन्ता

नर्गम्भवेत् । प्रागभा वोत्र दृष्टान्तः परमाणोश्च श्यामिका ॥ ६९ ॥

त० पृथ्वी रूपत्वेहेतोश्च जन्याणो रूपसन्ततिः । त थापि रागो मोह स्तुतत्व ज्ञान निवर्तितः ॥ ६२ ॥

त० परस्पराश्रयादोषानो दियन्तिततः स्फुटम् । प्रवृत्तिदुःख हेतुत्वस्याभावादात्म मोचनम् ॥ ६३ ॥

इति सकलमनर्थं राग हेतुंवि भाष्य प्रचुरतर समर्थं हान हेतुम्पदार्थम् ॥ विशदम कृत भाष्या र्थी वमूढम्प्रमेयम् हारि रिव हरि दत्तो मुक्त येसर्वहेयम् ॥६७॥

इति श्री त्रिवेदी पं० हरिदत्त शर्म विरचिता पाश्चातुर्थाध्यायप्रथमाहिक

सप्तम सारङ्गः समाप्तः ।

त० तत्वात्मभूतः कृतभूतसर्गौ विसर्ग एकस्यपदस्य विछिन्नम् विघ्नन्समस्तार्थ समर्थं तत्व प्राणः साविद्रेश्वर पाद् पोजयेत १

सू० दोष निमित्तानां तत्व ज्ञानाद्‌हङ्कार निवृतिः।१।

सू० दोष निमित्तं रूपादयो विषयाः सङ्कल्पकृताः।२।

सू० तन्निमित्तन्त्व वय व्याभिमानः । ३ ।

त० त.व प्रबोधः सकल्पेप दार्थें विशिष्य नापेक्ष्यत इत्य वाचि प्रस्ने यहे यानि विभज्यतेषु मिथ्या व बोधो विनिर्वर्तनीयः ॥ २ ॥

त० तान्येत्र दोषस्य निदान मिथ्या ज्ञान प्रवाहे पतिता निंपुसाम तेनात्म बुद्धिश्चशरीर निष्ठा निवर्त नीया कृतिभि र्विमुक्त्यै ॥ ३ ॥

दोषाहि कान्ताधर पल्लवानां भ्रान्त्या फल त्वेन कवीहितानां रूपादिभिः स्वर्ग सुखाभिषङ्ग सङ्कल्पन्य देव गदाहि जाताः ॥ ४ ॥

तत्कल्पना व यविविशेष संज्ञा संज्ञान मेतत्सुनसा

कपोलैः। मृणालदण्डाल बिशाल बाहु कुष्टात्म बाणस्तन चिन्तनेन ॥ ५ ॥

सू० विद्याऽबिद्या द्वै बिद्यात्संशयः ॥ ४ ॥

सू० तद् संशयः पूर्बहेतु प्रसिद्ध त्वात ॥ ४ ॥

त० विद्याप्य बिद्या द्विबिधा समुक्ता न संशयोवा वयवी तु सिद्धः पूर्वोक्त हेतू न विखण्डय सामान्य ज्ञान मात्रा न्नहि संशयः स्यात ॥ ६ ॥

सू० बृत्यनुपपतेरपि तर्हिन संशयः ॥ ६ ॥

सू० कृत्स्नैक देशा वृति त्वादवयवाना मवयव-व्यभावः ॥ ७ ॥

सू० तेषु चाबृते रवय व्यभावः ॥ ८ ॥

सू० पृथकू चावय वेभ्योऽबृतेः ॥ ९ ॥

त० नकृत्स्न बृत्तिश्चन चैक देशेऽवयवेषु तेनास्तितथाप्य वयवी न तत्र बाचा वयव स्थितिश्च संसाध्यते तो नभवेत्पृथकूच ॥ ७ ॥

सू० न चावय व्यवयवाः ॥ १० ॥

सू० एक स्मिन्भेदाभावाद्भेदशब्द प्रयोगानुपपत्ते-रप्रश्नः ॥ ११ ॥

सू० अवयवान्त राभा वेप्यवृते रहेतुः ॥ १२ ॥

मैवं न तस्या व यवा स्तदन्ये न भिन्न एको न भिदा प्रयोगः । युज्येत वृत्तिस्तु प्रतीति सिद्धा परेऽपि खण्डे ऽसातिसा न नष्टा ॥ १ ॥

त० नित्येषु चैवङ्कित्व लोक सिद्धांवृतिं विलोक्यानु मितिं विधेहि वृतेस्ततः संशय हानिरेवं प्रत्यक्ष सिद्धोवयवी तुकल्प्यः ॥ ६ ॥

सू० केश समूह तैमिरिको पलब्धिवत्त दुपलब्धिः ॥ १३ ॥

सू० स्वविषयानति क्रमेणेन्द्रियस्य पटुमन्द भावाद्विषय ग्रहणस्य तथा भावोना विषये प्रवृत्तिः ॥ १४ ॥

त० केशान्समूहे न यथा तुतै मिरः पश्ये तथाणु न पिनैतिशङ्क्यम पद्वा दिसंसाधन तो ज्ञानासुविशेषएवन्न गतिर्विगोचरे ॥ १० ॥

त० नसंचयोतीन्द्रिय गांपि दृश्यो ह्यतीन्द्रियत्वा न्महतो हियोग्यता न चाणु वृत्तौ दृशि गोचर त्वम्म हत्व सामान्यक योग्य तायाः । ११ ।

सू० अवयवावयवविप्रसङ्गश्चै वमप्रलयात । १५ ।

त० न चाणु रस्तीति विशङ्क नीयं प्रत्यक्ष कार्य्या श्रय कल्पनायाः। निराश्रयत्वे प्रलयस्समस्त प्रयोगजातस्य भवेत्तु सर्गे ॥ १२ ॥

सू० नप्रलयोऽणुसद्भावात । १६ ।

सू० परंवा त्रुटेः । १७ ।

त० ततोऽनवस्था प्रलयादि दोषैः- –

त्रुटेश्च मेरौ स्तुलनादि दोषैः परोणु रस्तीति प्रकल्पनीयन्ते नैव सर्वार्थ क्रिया प्रसिद्धिः ॥ १३ ॥

सू० आकाश व्यति भेदात्त दनुपपतिः । १८ ।

सू० आकाशा सर्व गतत्वम्वा । १९ ।

सू० अन्तर्ब हिश्च कार्य्य द्रव्यस्य कारणान्तर बचनाद कार्य्यं तद भावः । २० ।

सू० सर्व संयोग शव्द विभवाच्च सर्व गतम । २१ ।

त० आकाश भेदात्पर माणव नित्यताऽऽकाशे विभुत्वस्याविलोपनम्वा न शङ्क नीयं खलु नित्य रूपेऽन्तर्देश वाह्यमाति कल्प नन्नो ॥ १४ ॥

शब्दाणु संयोगजानिः खएव सर्वत्र तेनास्य च सर्व गत्वं देशान चाणोर्ग गनन्न चाश्रिंत समस्त युक्तं वरमस्य वैभवम् ॥ १५ ॥

सू० अव्यूहा विष्टम्भ विभुत्वानि चाकाश धर्म्माः।२२।

त० अव्यूह विष्टम्भ विभुत्व धर्म्मा आकाश एवाणु षुमध्य गोनो अणोस्ततोवावयवोणु मात्रः सम्पद्यतेऽन्त्यस्तु पराणु रूपः ॥ १६

सू० मूर्तिमताञ्च संस्थानोप पतेरवयव सद्भावः । २३ ।

सू० संयोगोपपत्तेश्च । २४ ।

सू० अनवस्था कारित्वादन वस्थानुपपतेश्चा प्रति षेधः । २५ ।

त० नमूर्तता चावयवस्य साधिका योगोपिव्याप्त्यै व गतो न देशात अवस्थया कल्पित मूर्ति भेद काष्ठा पराणु र्यतएषकल्पः ॥ १७ ॥

सू० बुद्ध्या विवेचनात्तुभावानां याथात्म्यानु पलब्धि

स्तन्त्वप कर्षणे पट सद्भावानुपलब्धिवत तदनु पलब्धिः ॥ २६ ॥

सू० व्याह तत्वाद हेतुः ॥ २७ ॥

सू० तदाश्र यत्वादपृथग्ग्रहणम् । २८ ।

त० यथा बिबेकेऽब्यवीनासिद्ध यति तन्त्वा खिला कृष्ठ पटाद्यभावात मैव म्विरोधाद्व चसो न सिद्धिः पृथग्ग्र होंनावयवेषुबृत्तेः ॥ १८ ॥

सू० प्रमाणतश्चार्थ प्रति पत्तेः । २९ ।

सू० प्रमाणानु पपत्युपपत्तिभ्याम् । ३० ।

त० प्रमाण तस्त्वर्थं यथार्थ तातां प्रतीतमात्रोवस्वीकरोति । अतो नसर्वम्मतमेवयच्च खराडथं हिहेतो विंरहाचासिद्धेः ॥१९ ॥

सू० स्वप्न विषया भिमानवदयं प्रमाण प्रमे याभिमानः । ३१ ।

सू० माया गन्धर्व्व नगर मृग तृष्णि कावद्वा ।३२।

सू० हेत्वभा वाद सिद्धिः ॥ ३३ ॥

स्मृति सङ्कल्पवच्च स्वप्न विषया भिमानः । ३४ ।

त० स्वप्ने यथायं विषया भिमानो मायासु गन्धर्व्व पुरादिवद्वा । नशङ्कु नीयंविरहाच्चहेतोः स्वप्नस्य मिथ्यात्व प्रसिद्धयेच ॥ २० ॥

त० यथा पुरा दृष्ठ पदार्थ चिन्ता सङ्कल्पनश्चात्र मसौ हिस्वप्ने पदार्थ बोधो विषया भिमानादृद्रया विशेषे किमुकेनखण्डयम् ॥ २१ ॥

सू० मिथ्योपलब्धि विनाशस्तत्व ज्ञानात् स्वप्न विषया भिमान प्रणाशवत् प्रति बोधे । ३५ ।

० बुद्धेश्चैवं निमित्त सद्भावो पलम्भात् । ३६ ।

सू० तत्व प्रधान भेदाच्च मिथ्या बुद्धेर्द्वै विध्योप पत्तिः । ३७ ।

त० नार्थो निवर्त्येत परार्थ इति स्वप्नो ऽपरं भ्रान्ति निवृति रेव जाग्रात्सु यद्वत्वयिसन्नवयवी मिथ्योपलब्धिर्वि निवर्तनीयः । २२ ।

आत्मा भिमानाभि हतिर्जडत्वम् मांसा दिभावेनच भावनं स्यात् निमित्ततो बुद्धि बिपर्य्य यश्चसन्नवखण्डपो न तुरोध नीयः ॥ २३ ॥

यथार्थ बुद्धिभ्रम एषभेदः सत्वे पदार्थस्य विशिष्य वाच्यः ।

त० यस्यास्ति सर्वान्नि रूपाख्य मेवं मिथ्यामतिर्नोपिचतत्न बुद्धिः ॥ २४ ॥

सू० समाधि बिशेषाभ्या सात । ३८ ।

नार्थ बिशेषप्राबल्यात । ३९ ।

त० तत्तत्व बुद्धेर भिलाष पूर्वकः पदार्थ

बुद्धि न्द्रिय चेत सांहतिर्हतस्य संघारण मेत देव समाधिरे षोस्तिप्र धान हेतुः ॥ २५ ॥

सू० क्षुदादिभिः प्रवर्त्तनाच्च । ४० ।

सू० पूर्व कृत फलानु बन्धात तदुत्पत्तिः । ४१ ।

सू० अरण्य गुहा पुलिनादिषु योगाभ्यासोपदेशः । ४२ ।

त० मनो हरे द्रानभिलष्य तोपि

त० सौदामिनी शद्ध इतोऽसमाधिः क्षुदादि रूपादि पदार्थ जात प्राबल्यतो मैत्रमिदंहि शङ्क्यम् ॥ २६ ॥

त० अनेक जन्मा र्जितपुण्यवै भवात्समाधि पाकं भगवानुताह गुहा स्वरण्ये पुलिनेष्वतश्त्र योगोपदेशोऽभ्यस नीय मार्ग: ॥ २७ ॥

त० मुनीन्द्र वर्य्यैं र्हियथैवलोके व्यासक्ताचितोवद तिश्रु तन्नो बचस्त्वदी यङ्क्लि कामिनीत्द्दतं ने तोनचे तोम इहाद्यतिष्ठति ॥ २८ ॥

सू० अपवर्गे ऽप्येवं प्रसङ्गः । ४३ ।

सू० ननिष्पन्नावश्यम्भा वित्वात् । ४४ ।

सू० तदभावश्चापवर्गे ॥ ४५ ॥

त० न चाप वर्गेऽर्थ विशेष सङ्गः प्रावल्यदोषाद-पिशङ्क नीयः। जन्म प्रसिद्धा यतना न बुद्धिः प्रवर्ततेमूल बिहीन मुक्तेः ॥ २९ ॥

तत्सत्वमूलस्थिति रस्यनाशेन शङ्कि तं कश्चिदपीष्ट एवं नमानिनीमान मदातिरकः प्रसेक शून्यो पर षण्ड सारः ॥ ३० ॥

सू० तदर्थं यम नियमाभ्या मात्म संस्कारो योगा-चाध्यात्म विध्युपायैः । ४६ ।

सू० ज्ञान ग्रहणाभ्या सस्तद्विद्यैश्च संवादः । ४७

त० मोक्षस्यासिद्ध्यङ्ग समाधि सिद्धः सामान्याभिन्ना चरण स्वरूपः संस्कार आत्माखिल शुद्धि कृन्नियमैर्यमैर्योग विधान जातः ॥ ३१ ।

त० अध्यात्मशास्त्रार्थ विचार जातं श्रुत्वा चमत्याध्ययना दिनाच निरन्तरन्तद्वि दितैः समञ्च संवादतस्तत्परिपाक सिद्धिः ॥ ३२ ॥

सू० तंशिष्य गुरु सब्रह्मचारि विशिष्ट श्रेयोर्थिभिरनसूयिभिरभ्यु पेयात् ॥ ४८ ॥

सू० प्रतिपक्ष हीन मपिवा प्रयोजनार्थ मार्थत्वे, ४९

त० शिष्यैः सतीर्थ्यैर्गुरु भिर्विशिष्टैः श्रेयोर्थिभिर्निर्मद्वीतदोषैः संवाद तत्स्वात्म मतार्थ बोधानुज्ञा प्रसिद्धिं विदधीत योगी ॥ ३३ ॥

सू० तत्वाध्यवसाय संरक्षणार्थं जल्प वितण्डे बीज प्ररोह संरक्षणार्थं कण्टक शाखा वरणवत् । ५० ।

त० प्रयोजनार्थं परवाग्विलासैः स्वपक्षहीनैरपि

शोंधयतस्वम् । मतन्नुत त्वंविचिकित्समानो मीमांसयाहाटक निश्चयोऽग्नौ ॥ ३४ ॥

तद्रक्षणं जल्प वितराडया भवेत् बीज प्ररोहावरण न्नुकराटकम् ताभ्याम्विगृह्येव बुभुत्सया क्रियात् तत्वस्य रत्तांखलुसाध नवा ॥ ३५ ॥

इति सकल मुपायं हे यहानस्य हे तुं मुनिगदित व चोर्भिदर्शित न्तत्वतोत्र जनयतु रसनायां यस्य हृद्ये विबोधम् जनकमल्लपुरीष प्राप्ति हानंहि तस्या ॥ ३६ ॥

इतिश्रीत्रिवेदि पण्डितहरिदत्त शर्मविरचितायाश्चतु-र्थाध्याय द्वितीयान्हिक तसुधालहर्या

अष्टम सारङ्गः समाप्तः ।

——:०:——

सू० साधर्म्य वैधर्म्योत्कर्षाप कर्षवर्ण्या वर्ण्य विकल्प साध्यप्राप्त्यप्राप्ति प्रसङ्गदृष्टान्ता नुत्पत्ति संशय प्रकरणहेत्वर्थापत्त्यविशेषोपत्त्युपलब्ध्यनुपलब्धि नित्या नित्य कार्यसमाः ॥ १ ॥

त० सिन्दूराद्रि समान मान मद दानासिक्त सारस्वत, स्रोतः पूत जगत्त्रयोरदनमूलोत्तारिताखण्डभूः कर्णा स्फालविधा विताखिलमहाविघ्नैकवातप्रभूर्विघ्नेशो जयतीन्द्रियानुकरणो भूतात्म सारःस्वतः ॥ १ ॥

जल्पेपर्यनुयोगः स्याच्छलादेरितिसाधितम्। वादे-विशेषणैर्भाष्येततस्तेऽनन्तरंमताः ॥ १ ॥

जातिस्थापनहेतौयः प्रतिषेधः प्रसज्यते। साधर्म्येणच वैधर्म्याद् भिन्नाविंशतिभिस्त्रिभिः ॥ २ ॥

क्रमात्सूत्रकृदुक्तायां जातेर्भेदान्प्रवच्म्यहम् । स लक्षणानुदाहृत्यक्रमात्सूत्रार्थसंगतान् ॥ ३ ॥

सू० साधर्म्य वैधर्म्याभ्या मुपसंहारे तद्धर्मविपर्ययो-पपत्तेः साधर्म्य वैधर्म्यसमौ ॥ २ ॥

त० साधर्म्यान्निगते हेतौ वैधर्म्याद्वा प्रसज्यते।
विपरीतस्यताभ्यांतु साध्याभावः सकथ्यते ॥ ४ ॥

साधर्म्य सम वैधर्म्य समौचेतिद्विभेदतः। क्रियाहेतु-
गुणीह्यात्मा क्रियावांल्लोष्ट्वद्भवेत् ॥ ५ ॥

एवमुक्तेयदुक्तंस्यात्सधर्म्यात्सक्रियस्यचेत। सक्रियः
किन्नसाधर्म्यादाकाशस्या क्रियोभवेत ॥ ६ ॥

वैधर्म्यात्तस्य निष्कर्माक्रियावांल्लोष्टवत्कुतः। न
सम्पद्येतजीवोय मित्येवंसंगतिःस्फुटा ॥ ७ ॥

सू० गोत्वाद्गोसिद्धि वत्तत्सिद्धिः ॥ ३ ॥

त० साधर्म्यवानैवधर्म्यं किंहेतुःकश्चिदेवतु। साधनं-
तद्विशेषोऽतोगोत्वंगामिव साधयेत ॥ ८ ॥

क्रियाहेतुगुणोहेतुः साध्यमित्युत्तरंभवेत। साधर्म्या-
देर्विशेषस्य प्रसङ्गादग्रिमाभिदा ॥ ९ ॥

सू० साध्यदृष्टान्तयोर्द्धर्माविकल्पादुभय साध्यत्वा-
च्चोत्कर्षापकर्ष वर्ण्यावर्ण्यविकल्प साध्यसमाः ॥ ४ ॥

किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ।८।

साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ९ ॥

त० दृष्टान्तस्याधिकोधर्मो यस्तुपक्षेप्रसञ्जितः । उत्कर्षसम उक्तः स आत्मा स्पृश्यात्तुलोष्ठवत् ॥ १० ॥

यथाप्रज्यतेधर्मोऽपकर्षसम उच्यते, दृष्टान्तेष्टाप्तिरा-प्तिर्प्येतैवंपक्षेपियस्तुसः ॥ ११ ॥

लोष्टवदविभुर्जीवो यत्रकश्चित्प्रसज्यते । दृष्टान्तं साध्यमुच्येत साधनंनासिद्धं मुच्यते ॥ १२ ॥

वर्ण्यावर्ण्यसमौप्रोक्तौ स्फुटोदाहरणामतौ । दृष्टान्ते धर्मभेदोहिद्रव्यान्तरकृतःस्फुटः ॥ १३ ॥

तद्वदेवप्रसज्येत विकल्पसमएषतु । लोष्टोवातश्च-यद्वत्स्या द्गुरुश्चलघुतांगतः ॥ १४ ॥

क्रियावांलोष्टएवंस्यादात्मास्यादक्रियःपुनः । साध्यत्वं-कर्मवत्तस्यत्वदुक्तया लोष्टगंभवेत् ॥ १५ ॥

एवंसाध्यसमः प्रोक्तोऽन्योक्तया वर्ण्यसमोऽपिसः

विकल्पाद्धेतुसाध्यीय धर्मिधर्मस्यसाध्यतः ॥ १६ ॥

प्रोक्ताभेदा इमेसर्वे सिद्धेतुनिन्हवः कथम् । हेतुर्यः-
सिद्धधर्मोहिदृष्टान्तोत्रानिगद्यते ॥ १७ ॥

सू० प्राप्यसाध्यमप्राप्यवाहेतोः प्राप्त्याऽविशिष्टत्वाद-
प्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥

त० पूर्वोक्तमुत्तरंतेन युक्तमत्रापिसम्भवेत् । सतः
प्राप्त्या नसिद्धिः स्यादप्राप्तेननसाधनम् ॥ १८ ॥

घटवद्दीपवच्चोति प्राप्त्यप्राप्तिविकल्पतः । हेतोःसाध्य
प्रतिषेधौ प्राप्त्यप्राप्तिसमौ मतौ ॥ १९ ॥

सू० घटादि निष्पत्ति दर्शनात्पीडने चाभिचाराद
प्रतिषेधः ॥ ८ ॥

त० साधनात्साध्यनिष्पत्तौ प्राप्त्यप्राप्तीन साधिके ।
प्राप्ताद्घटोमृत्तिर्दृष्टाऽप्राप्तात्कथेनाचकारकात् ॥ २० ॥

साध्याप्राप्तिर्नसत्कार्यं सर्वत्रातः परन्तुनो । सामाना-
भिकरण्येनसिद्धिर्दृष्टाहि साधकात् ॥ २१ ॥

सू० दृष्टान्तस्य कारणा न पदेशात्प्रत्यवस्थानाच्च

प्रतिदृष्टान्तेन प्रसंगप्रतिदृष्टान्तसमौ ॥ ९ ॥

प्रदीपोपादान प्रसंगनिर्वृत्तिवत्ताद्विनिवृत्तिः ॥१०॥

प्रतिदृष्टान्त हेतुत्वेचना हेतुर्दृष्टान्तः ॥ ११ ॥

त० हेतु दृष्टान्तयोर्हेतु दृष्टान्तापेक्षणाद्भवेत । प्रतिषेधस्तु प्रसंगःप्रतिदृष्टान्तईर्यते ॥ २२ ॥

दीपेदीपान्तरालोकोनापेक्षः सिद्ध्यतोभवेत। दृष्टान्ते ऽपिकथंतत्र प्रतिदृष्टान्त कल्पनम् ॥ २३ ॥

नतस्य हेतुतातत्र नाहेतुः साधकोभवेत् । असिद्धो- वापिदृष्टान्त इत्येवमुत्तरं भवेत् ॥ २४ ॥

सू० प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः । १२ ।

तथा भावादुत्पन्नस्य कारणोपपत्तेर्न्न कारण प्रति- षेधः ॥ १३ ॥

त० हेत्वभावात्पुरासाध्या भावात्साध्यस्य खंडनम् । स उत्पत्तिसमः प्रोक्तः शब्देऽनित्यत्व साधने ॥ २५ ॥

प्रयत्न जन्यताहेतुः पुरानास्तीति नित्यता । तत्वे- नित्यत्व साध्यस्य प्रतिषेधोंय उच्यते ॥ २६ ॥

अनुत्पन्नोनशब्दः स्यादुत्पत्तौहेतुः सत्वतः । पुरा-प्रयत्न जन्यत्वस्या भावोनैवदूषणम् ॥ २७ ॥

सू० सामान्यदृष्टान्तयो रैन्द्रियकत्वे समानेनित्यानित्यसाधर्म्यात्संशय समः ॥ १४ ॥

साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशय प्रसंगोनित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥

त० अत्रैवसाध्यतदभावानां दृष्टेःक्वचिद्भवेत् । संशयात्संशय समस्सामान्ये च घटेयथा ॥ २८ ॥

ऐन्द्रियत्वस्यतौल्येऽपि नित्यानित्यत्वयोःस्थितिः । ऐन्द्रियत्वंपत्तवृत्तिप्रकल्प्या यंहिसंशयः । २९ ।

न दूषणं विशेषेणसंशयस्य निवर्त्तनात् । शब्दप्रयत्न-जन्यत्वं विशेषस्तुनिगद्यते । ३० ।

सू० उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः १६

प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षो-पपत्तेः ॥ १७ ॥

त० साधर्म्यहि साध्यधर्मे तदभाववताभवेत् । प्रक्रिया-
हेतुतस्मात् प्रकरण समता भवेत् ॥ ३१ ॥

प्रयत्नजन्यताहेतुः साधर्म्यं जन्यता भवेत् । नित्यस्या-
ऽपिचसाधर्म्यं प्रक्रियाकारणन्त्विदम् ॥ ३२ ॥

उभयेनहि साधर्म्यात्प्रक्रियासिद्धिरुच्यते । प्रतिपक्षस्य
सिद्धिस्तुतेनैवप्रतिपादिता ॥ ३३ ३

सू० त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥

नहेतुतः साध्यासिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥

प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥

त० हेतो स्त्रैकाल्यवृत्त्याऽपि साध्यस्यासाधनंभवेत् ।
अहेतुसम इत्येष प्रतिषेधोनयुज्यते ॥ ३४ ॥

हेतुःसाधक इत्यस्मिन्नदूषणगणोभवेत् । साध्यता-
ज्ञापनं तत्रसत्वंनैवास्तिदूषणम् ॥ ३५ ॥

प्रतिषेधस्यतत्कल्पे प्रतिषेधनकल्पना । त्रैकाल्यासिद्धि-
तस्तुल्याजातिरेव विभाव्यताम् ॥ ३६ ॥

सू० अर्थापत्तिः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥२१॥

अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥

त० अर्थापत्तिकृतासिद्धिः प्रतिपक्षस्ययाभवेत् । स्थापना वाक्यतः सैवार्थापत्तिसम उच्यते ॥ ३७ ॥

जन्यत्वाच्छब्द नित्यत्वेप्यजन्यतुलितो भवेत। नित्योपिशब्द इत्येवमर्थादा पद्यते यथा ॥ ३८ ॥

विरोधिहेतुनाऽनुक्तोर्थान्नापादयितुंक्षमः विरोधमात्रतोदृष्टा नार्थापत्तिः कचित्पुरा ॥ ३९ ॥

घनोपलस्यपतनमित्युक्तया द्रववर्षणम् । निषिध्यते ततोयुक्तं वचस्तेऽनुपपत्तितः ॥ ४० ॥

सू० एक धर्मोपपत्तेराविशेषे सर्वाविशेषप्रङ्गात्सद्भावोपपत्तेराविशेषसमः ॥ २३ ॥

कचिद्धर्मानुपपत्तेःकचिच्चोपपत्तेःप्रतिषेधाभावः ।२४।

त० हेतुतःसाध्यासिद्धौ यत्सत्वधर्मस्यकल्पनात् । सर्वाविशेषसम्पातो ऽविशेषसमईरितः ॥ ४१ ॥

प्रयत्नजन्य साधर्म्या दनित्यः शब्दईश्यते । सत्वतः सर्वमेवंस्यादेकरूपंचराचरम् ॥४२॥

यत्रोपपद्यतेहेतुस्तत्रसाध्यस्यकल्पनं । तेनानित्ये-ऽप्यनित्यत्वंप्रसङ्गे व्याहतिस्तुते ॥ ४३ ॥

सू० उभय कारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥

उपपत्तेः कारणाभ्यनुज्ञानाद प्रतिषेधः ॥ २६ ॥

त० हेत्वन्तरोपपत्या यत्साध्याभावस्य कल्पनम् । उपपत्ति समस्त्वेषोस्पर्शत्वाद्वाचि नित्यता ॥ ४४ ॥

यथात्मनीतिदोषोयमभ्यनुज्ञायदीयते। व्याघातदूषणं-तुल्यं मतानुज्ञात्र चोत्तरम् ॥ ४५ ॥

सू० निर्दिष्ट कारणा भावेप्युपलम्भादुपलब्धि समः ॥ २७ ॥

कारणान्तरादपितद्धर्मोपपत्तेर प्रतिषेधः ॥ २८ ॥

त० हेतोरभावेसाध्यस्योपलब्धिपरिदर्शनात् । उप-लब्धिसमस्त्वेषः प्रतिषेधः प्रकीर्तितः ॥ ४६ ॥

विभागजोऽपिशब्दोऽस्ति प्रयत्नजनितान्नन । हेत्व-न्तरात्साध्यसिद्धौ हेतोः किंदूषणं तुमे ॥ ४७ ॥

सू० तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतो-पपत्तेरनुपलब्धिसमः ॥ २९ ॥

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥

ज्ञानविकल्पानाञ्च भावाभावसंवेदनाद ध्यात्मम् ॥३१॥

साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्व प्रसङ्गादनित्य-समः ॥ ३२ ॥

साधर्म्याद सिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्य-साधर्म्याच्च ॥ ३३ ॥

सू० दृष्टान्तेच साध्यसाधन भावेन प्रज्ञातस्यधर्मस्य हेतुत्वात्तस्य चोभयथा भावान्नाविशेषः ॥ ३४ ॥

त० अनुपलब्ध्यज्ञानताऽभावादावृति कल्पनम् अनु-पलब्धिहेतुत्वेऽनुपलब्धि समदूषणम् ॥ ४८ ॥

भाववन्नग्रहोप्यस्या भावादत्रनदूषणम् ।सर्ववेद्याऽग्रह-ज्ञाने प्रतिषेधः क्वयुज्यते ॥ ४९ ॥

दृष्टान्ततुल्यधर्मेण हेतुवत्काल्पितेनतु । सर्वानित्यत्व-क्लृप्तिर्या साऽनित्यसमदूषणम् ॥५०॥

घटवद्वागनित्यत्वेज्ञेयत्वाद् घटवद्भवेत्। अनित्यतातुसर्वस्य साधर्म्यात्तेनतूत्तरम् ॥ ५१ ॥

जातिस्तद्वत्तुसर्वोऽपिप्रतिषेध्योभवेदिति । मत्पक्षवत्त्वदीयोऽपिपक्षोऽहेतुः समोभवेत् ॥ ५२ ॥

साध्यसाधनभूतस्य दृष्टान्तेदर्शनान्मया। साध्यासिद्धौनदोषोयमभावादिति चोत्तरम् ॥ ५३ ॥

सू० नित्यमनित्यभावाद नित्येनित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥

प्रतिषेध्येनित्यमनित्यत्वापत्तेः प्रतिषेधाभावः ।३६।

त० अनित्यताभवेन्नित्याऽनित्यावेतिविकल्पताम् ।
अनित्यनित्यतापत्तिरेषनित्यसमोभवेत् ॥ ५४ ॥

अनित्यताया नित्यत्वेनानित्यस्याऽस्तिनित्यता ।
मतानुज्ञा विरुद्धस्याप्यस्तिशब्दस्यकल्पनम् ॥ ५५ ॥

सू० प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ ३७ ॥

त० दूषणञ्चात्रहेतोर्यः कार्यानेकत्वतःकृतः ।
सकार्य सम इत्युक्तः प्रतिषेधोत्रचान्तिमः ॥ ५६ ॥

अभिव्यक्तिरपिज्ञाता नित्येयत्नकृताततः । नैवा-
नित्यत्वसंसिद्धिर्दूषणं तद्विभाव्यताम् ॥ ५७ ॥

सू० कार्यान्यत्वे प्रयत्नाहेतु त्वमनुपलब्धिकारणो-
पपत्तेः ॥ ३८ ॥

प्रतिषेधेऽपिसमानोदोषः ॥ ३९ ॥

सर्वत्रैवम् ॥ ४० ॥

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

प्रतिषेधंसदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधेसमानो-
दोषप्रसङ्गोमतानुज्ञा ॥ ४२ ॥

स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशेपरपक्ष-
दोषाभ्युपगमात्समानोदोष इति ॥ ४३ ॥

त० आवृत्तेः कार्यभेदः स्याच्छब्देतत्खण्डनादि-
दम् । न युक्तंदूषणंत्वे तदुत्तरंपरिकीर्तितम् ॥ ५८ ॥

प्रयत्नाहेतुताकार्यभेदेकारणभेदतः । अनेकान्तिकतादोषः प्रतिषेधे समोभवेत ॥ ५९ ॥

सर्वत्रदूषणे वाच्यमेवंस्यादविशेषतः । अनैकान्तिक हेतोस्तुदूषणं वादिनोः किल ॥ ६० ॥

प्रतिषेधप्रतिषेधे दूषणंतद्भवेत । प्रतिषेधे सदोषत्वेमताऽनुज्ञातुदूषणम् ॥ ६१ ॥

अनेकान्तिकतातौल्याद्दूषणस्यापितद्भवेत । तदेवंपत्तषट्कंतु जात्यवस्थाकृतंमतम् ॥ ६२ ॥

इतिनिगदितमर्थोद्धावनं भाष्यरीत्या सकलकललभूतं जातिदोषात्मकंयत। स्वकृतमतिविहीनस्यास्तितद्वर्जनीयंनिजपथगतिशीलैर्धर्मसंस्थापकैस्तु ॥ ६३ ॥

इति श्री व्याकरण तीर्थ त्रिवेदी पण्डित हरिदत्तशर्माविरचितायाः । पञ्चमाध्याय प्रथमाह्निकतत्त्व सुधालहर्या नवमस्तरङ्गः समाप्तः

———

सू० प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तर मर्थान्तरं निरर्थकमविज्ञातार्थम-पार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानम-प्रतिभाविक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानु-योगोऽपसिद्धान्तोहेत्वाभासाश्चनिग्रहस्थानानि ॥ १ ॥

त० अङ्कुशकारितलोलविलासं, पोदकपूरितपात्र-विकासम्। साशङ्कं वनिता वलितासं विघ्नेशंप्रणमामि-गजास्यम् ॥ १ ॥

जात्युत्तरगतस्थानान्निग्रहस्थानमुच्यते। पराजयपदं-पञ्चभेदैर्द्वाविंशतिर्मतम् ॥ २ ॥

सू० प्रतिदृष्टान्त धर्माभ्यनुज्ञा स्वदृष्टान्तेप्रतिज्ञा-हानिः ॥ २ ॥

त० प्रतिदृष्टान्तधर्मस्य स्वदृष्टान्ते प्रकल्पनम्। प्रतिज्ञाहानिराख्याता प्रतिज्ञाहननात्स्वयम् ॥ ३ ॥

वार्तिके प्रतिपक्षस्य पक्षत्वोपगमाद्धि सा शब्दो-नित्योऽस्त्यैन्द्रियत्वाद्घटवद्यत्रसाध्यते ॥ ४ ॥

सामान्ये व्यभिचारेण नित्यत्वव्याप्यवस्थितौ ।
हेतौघटोऽपिनित्योऽस्तुदूषणं भाष्यगंत्विदम् ॥ ५ ॥

विरोधेऽपिनपक्षस्या नित्यत्वं हन्यतेखलु । तेन-
शब्दोऽपिनित्योस्तु वार्तिके दूषणस्थलम् ॥ ६ ॥

सू० प्रतिज्ञातार्थ प्रतिषेधेधर्मविकल्पात्तदर्थनिर्देशः
प्रतिज्ञान्तरम् ॥ ३ ॥

त० पुरोक्तपक्षेदोषेण विशेषणभिदा भवेत् । प्रति-
ज्ञान्तरमित्येतद्धेतुभेद प्रयोजितम् ॥ ७ ॥

असर्वगतशब्दस्यतत्वैनैन्द्रियता यदा । सामान्य
व्यभिचारेण कल्प्यते दूषणंतदा ॥ ८ ॥

सू० प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥

त० यदासाध्यहेत्वोर्विरोधःस्फुटःस्यात्प्रतिज्ञाविरोधः
समुक्तामुनीन्द्रैः । गुणोद्रव्याभिन्नोऽपृथग्दर्शनादेवमावेद्यते
यत्रदोषोयमस्ति ॥ ९ ॥

सू० पक्ष प्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञा
संन्यासः ॥ ५ ॥

अविशेषोक्तेहेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ।६।

त० निन्हवः स्वस्य पक्षस्य मिथ्यावादेनयत्रसः । प्रतिज्ञा संन्यास उक्तोनोक्तंनित्यं मयावचः १०। धर्मयत्राविकल्पैव न परदोषोनिवृत्तये । हेतुर्विशेष्यते तत्र हेत्वन्तर श्रितं भवेत् । ११ ।

सू० प्रकृतादर्थाद प्रतिसंबद्धार्थमर्थान्तरम् ॥ ७ ॥

त० प्रकृतार्थो साधकंयत् तदर्थान्तर मिष्यते । विनायकं प्रकुर्वाणोरचयामास वानरम् ॥ १२ ॥

शब्दोनियोत्रहेतुः स्याताद्भिनोतस्तुनितत्पदम् । सुप्तिङन्तंपदंप्रोक्तं नामधातत्तरेचते ॥ १३ ॥

सू० वर्णक्रम निर्देशवन्निरर्थकम् ॥ ८ ॥

त० अर्थाविवक्षयावाक्यं निरथकमुदाहृतम् । शब्दोनित्यः कचटतपाज्जबगडेदशवद्यथा ॥ १४ ॥

सू० परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञात मविज्ञातार्थम् ॥ ९ ॥

त० श्लेषादिकारणैर्वाक्यं सभ्येन प्रतिवादिना । नावगन्तुंभवेच्छक्य मविज्ञातार्थकंतुतत ॥ १५ ॥

सू० पौर्वापर्या योगादप्रति संबद्धार्थमपार्थकम् ।१०।

त० सार्थकानिपदानिस्युर्वाक्यंनार्थप्रकाशकम् । आकाङ्क्षादिगुणाभावादपार्थकमिदंभवेत् ॥ १६ ॥

दशदाडिमान्यपूपाः कुमारी कुराड पिराडगा । इत्येवं बहुधालापः साध्यहेत्वाद्यभाववान् ॥ १७ ॥

सू० अवयवविपर्य सवचनमप्राप्तकालम् ॥ ११ ॥

हीनमन्यतमेनाप्यवयवेनन्यूनम् ॥ १२ ॥

हेतूदाहरणाधिकमधिकम् ॥ १३ ॥

त० क्रमंविमुच्ययत्रोक्तोऽयवानांगणस्तुत । अप्राप्तकालमाख्यातं कुम्भवद्गीरनित्यता ॥ १८ ॥

हीनकेनाप्यवयवेनेदं न्यूनमतंयथा । गीर्नित्यात्मा यथेत्यादि द्विरुक्तैकोधिकश्चसः ॥ १६ ॥

शब्दोनित्यस्तथात्वाच्च शब्दात्वाच्चगुणत्वतः । घटवत्पटवच्चेति वाक्यमेवंतथामतम् ॥ २० ॥

सू० शब्दार्थयोः पुनर्वचनं पुनरुक्त मन्यत्रानुवादात् ॥ १४ ॥

अर्थादापन्नस्यस्वशब्देन पुनर्वचनम् ॥ १५ ॥

त० एकस्य पुनरुक्तिः सापुनरुक्त मुदाहृतम् ।
शब्दोनित्यो गुणत्वाच्च गुणत्वाच्चोच्यतेयदा ॥ २१ ॥

अर्थात्प्राप्तस्य सातच्चजन्यत्वाच्छब्दजन्यता ।
तथैव जन्यता हीनंनित्यमित्युच्यतेयदा ॥ २२ ॥

सू० विज्ञातस्य परिषदात्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १३ ॥

त० सभ्यवादित्रिरुक्तस्य नानुवादस्तु वादिना ।
यदास्फूर्त्यादि हेतूत्थंप्रोक्तंत्वननुभाषणम् ॥ २३ ॥

सू० अविज्ञातञ्चाविज्ञानम् ॥ १७ ॥

उत्तरस्याप्रतिपत्तिरप्रभा ॥ १८ ॥

त० अज्ञानंतुस्फुटंयोग्येऽज्ञानात्तत्खण्डनस्यच ।
या स्फूर्तिः सामुनिप्रोक्ताऽप्रतिभेति समास्फुटा ॥ २४ ॥

सू० कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥१९ ॥

त० कार्यव्यासङ्गतो यत्र विक्षेपः सतुतत्पदम् ।
शौचक्रियाप्यकालमांवाधते साम्प्रतंयथा ॥ २५ ॥

सू० स्वपक्षदोषाभ्युपगमात्परपक्षेदोषप्रसङ्गोमतानुज्ञा ॥ २० ॥

त० स्वपक्षदोषवद्यत्र परपक्षेऽपिदूषणम्। स्वानुद्धारेणतत्तुल्यं मतानुज्ञाप्रदीयते ॥ २६ ॥

सू० निग्रहस्थाने प्राप्तस्यानिग्रहःपर्यनुयोज्योपेक्षणम् ॥ २१ ॥

त० निग्रहस्थानप्राप्तस्यनावेदनमिदंभवेत् । अनुयोज्योपेक्षणंतत्पदस्यातिक्रमात्स्त्रयम् ॥ २७ ॥

सू० अनिग्रहस्थाने निग्रहस्थानाभियोगोनिरनुयोज्यानुयोगः ॥ २२ ॥

त० अपदे निग्रहस्यापि भीत्यर्थंयत्रकथ्यते । निग्रहोनिरनुयोज्यानुयोगः परिकीर्तितः ॥ २८ ॥

सू० सिद्धान्तमभ्युपेत्या नियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥

हेत्वाभासाश्चयथोक्ताः ॥ २४ ॥

त० स्फुटोदाहरणाः सर्वेनिग्रहास्ते मतागताः । सिद्धान्तस्य विरोधेस्यादपसिद्धान्त दूषणम् ॥ २६ ॥

सदेवसर्वसाङ्ख्यानां सिद्धान्ते यत्रसाध्यते । जन्यत्वादिविकारात्मा प्रकृत्यादिश्चतत्रसः ॥ ३० ॥

हेत्वाभासा लक्षिताःपूर्वमेव तस्मात्तत्रानुक्तरूपाश्चतेऽपि । विज्ञेयाः स्युर्निग्रहस्थानमध्येप्युक्ताः पूर्ववादसिद्धयर्थमेव ॥ ३१ ॥

इतिविहितमनल्पंभाष्यसूत्रार्थतत्वं, सकलकृतिहितायस्वल्पशब्दंयथार्थम् । बहुतरमनुजल्पन्नेव वादी यतोऽत्र प्रतिहतरयतार्थन्निग्रहैर्वध्यतेऽन्यम् ॥ ३२ ॥

इति श्री त्रिवेदी पण्डितहरिदत्तशर्म भिर्विरचितायाः पञ्चमाध्याय द्वितीयान्हिकतत्त्वसुधालहर्या दशमस्तरङ्गः समाप्तः ॥

समाप्ताचेयं तत्वसुधालहरी ।



कणिकानिदर्शनम् ।

सू० प्रवृत्तिदोषजनितोर्थःफलम् । भाष्यम । सुख दुःखसंवेदनंफलम् । सुखविपाकं कर्मदुःखविपाकंच । तत्पुनर्देहेन्द्रिय बुद्धिषु सतीषु भवतीति सहदेहादिभिः फलमभिप्रेतम् । तथाहि प्रवृत्तिदोषजनितोर्थः फलमेतत्सर्वं भवातितदेत्फलमुपात्तमुपात्तं हेयंत्यक्तंत्यक्तमुपादेय मिति नास्यहानोपादानयोर्निष्ठा पर्यवसानं वास्तिनखल्वस्य फलस्यहानोपादान स्रोतसाह्यते लोक इति । अथैतदेव ॥ तत्वसु० । मुख्यंफलं सुखं दुःखं हेयोपादेयतःद्वयोः ॥४५॥

गौणंतदर्थविश्वंस्यात् प्रवृत्यादोषयुक्तया जनितोर्थो-हिसर्वोपिदुःखकृत्सुखकृन्नतः ॥४६॥

कणिका । स्थानवत्प्रेत्यभावसंपादित तयाचोपजीव्य फलमाह मुख्य मिति प्रवृत्यादोषेत्यादि लक्षण वाक्यं विभागः पूर्वः मुख्यं गौणंद्विविधंफल मित्यर्थः मुख्यमाह सुखदुःखामिति तत्रहेतुमाह हेयेति तथाहिहेयं दुःखमिति निवृत्ति फलत्वंतस्ययुक्तमितिभावः एतदेवभाष्ये सुख-

दुःखेति समुक्तसंवेदनं ज्ञानंतन्मात्रेणतत्सत्तेत्याकूलं तदेव विशदयति सुखेस्यादिना भाष्ये सुखेतिविपाकः फलं द्विविधस्य धर्मा धर्मलक्षणस्य विपाकः सुखंदुखंचेति द्विविधकर्म जन्यत्व मेवफल द्वैविध्येहेतु रित्याशयः गौण माह गौणमितिविश्वं गौणतत्रहेतु तदर्थं तत्फलकं विशदय-तिसर्वोपमर्थः सुखकृद्दुःखकृन्मतः मननेनज्ञातः मननञ्च पुनरभ्यासादर प्रत्यवेक्षणं तेनैवविशिष्य फलवत्ता प्रत्ययः यद्वासुख कृदपि पामरप्रतीत्या मतिधीलैर्दुःख-कृन्मत इति अग्रिमसूत्रेऽन्वे तेदुःखभावनमुपदिश्यत इत्यर्थः यद्वातन्त्रेण पामराणां सुखकृदपि दुःख कृदेव-भातिमतां मतः प्रातिलोम्येन दुःखकृदापि सुखकृदेवमतो-ऽभिमतइत्यर्थः एतदेवतादर्थ्यं फलशब्दगौणप्रवृत्तौहेतु। तदेवभाष्येत त्युनरितियतो देहादिषु अन्वयव्यतिरेकेण तत्कारणत्वंगृहीतं ततः तेनसह फलंमुख्यं गौणदेहादि मुख्यसुख दुःखोभय रूपमभिप्रेतमाभि मुख्येनप्रकर्षेण शब्दस्य गौणतयाचेतंज्ञातं मुनिहृदयगत मेवत्वेत्यर्थः प्रवृत्तिकारणतयालक्षण गमनेनातिव्याप्तिर्लक्ष्यत्वादिति-

भावस्तदतथाहीति अस्यचाशयोन्ते लक्षणप्रदर्शनेन श्लोकेध्वनि तः सर्व इतित्रैकालिकत्वेनैव भासमान इत्यर्थकम् तदेत्रभाष्ये तदेतदुपात्तं गृहीतं विद्यमान शरीरादिव्याप्त्याहेयं नाश्यमन्ते दुःखकृत्वेन हेयत्वेनैव वा ऐतदर्थक मपिसुख कृदपि दुःखकृदिति सञ्ज्ञातिः कार्या एवंत्यक्तमगृहीतं भावि उपादेयं कृतस्यानारब्धफलस्य व्याप्त्याग्राह्यत्वामित्यर्थः नाभुक्तंक्षीयते कर्मकल्पकोटिशतैरपीतिस्मृतेः तदाहनास्योति एषोऽपिश्लोकेन संगृहीतार्थः मतइत्युक्तया यावदाभिमतः संसारे तथैवानिष्ठासमाप्तिः साचप्रलयेऽस्तीतिपर्य वसानंपरितोभाविप्रत्यवेक्षणेनसमाप्तिः पुनर्मोक्ष एवन संसारे तदोतत्काकूक्तया-दर्शयतिसंसार मर्यादां नखल्विति उह्यते एवतथा प्रवाहेणायंलोक इत्यर्थः सखल्विति पाठेतुस्फुटोर्थः कचित्त्वेप-पाठोनास्तीति क्वचित् दृष्टान्तपूर्तौप्रष्टव्यास्ते मत इति-सूचिलोप्येषोऽर्थोऽग्रिम श्लोके प्रकटः अत्रयद्दोषयु-क्तेपत्युक्तयावीतराग जन्माभावेन संसारिक त्वमेव फल-स्येत्यावेदितुंनिष्ठाभावसहेतु कत्वंचध्वनितं प्रलये निष्ठा-

यावप्रागभा वसामानाधिकरण्यंस्त्रीच चत्तं भवति इतिलभ्य-
एवैषोर्थोभाष्ये तादृशप्रवृत्तौचफल जनकत्वं दोषप्रयोज्य-
त्वेनानु मानिक मितिजन्य द्रव्यध्वंसरूपो महाप्रलय
इतसूत्रभाष्यस्वरस अतएवदोषपद मुपात्तंलक्षणेतु नप्रवेशो-
वैयर्थ्यात् एतस्मिन्फलेच सम्यगवगते मुमुक्षोर्वैराग्यमाश्रि-
यसूत्रेणा पाद्यंप्रवृत्ति परीक्षणे न दोषहानार्थं नित्य-
नैमित्ति का निष्ठानेनचात्मशुद्धि सम्पाद्यते ॥

—०—

# विज्ञापनम् !

विदाङ्कुर्वन्तु दिदृत्तवो विद्वांसः

यदेतदेतद्ग्रन्थकर्त्रा भवदीयमनोमुकरेष्वात्मनो बुद्धि-वैभवं निदर्शयितुमुपहारीक्रियते पुस्तकम् आशासे तत्र-भवन्तोऽध्ययनाध्यापनादिप्रचारेण अस्यादरद्वारा कर्तुरादरं विधास्यन्तीति येन तदुत्साहः परिवर्धिष्यते एतदन्ते कणि-का या निर्दिष्टा सापि भाष्यसौगम्याय निर्मास्यते तथा ये ये ग्रन्था एतद्भूमिकायां निर्दिष्टास्तेऽङ्कयिष्यन्ते परे च निर्मास्यन्ते एवं छात्राणामुपकृतिरपि विहिता भविष्यतीति एतदङ्कन समाप्तौ वाञ्छाऽऽसीत यदशुद्धि सूचीपत्रादि करिष्यते इति परन्तु तत्काले शरीरास्वास्थ्येन तथैतल्लेखक पं० उपेन्द्रनाथशास्त्रिशोकेन चित्तविक्षेपेन च न तदकारि लेखकयोजकभ्रान्त्या दृष्टिदोषेण च बहवोऽशुद्धयोत्र सञ्जाता विद्वांसस्ता असमीक्ष्य स्थलीयविषये यत्किञ्चित्संशय-निरासाय लेखिष्यन्ति तदुत्तरीष्यति मुदा कर्तेति शम् ॥

( ग्रन्थकर्तुः पुनर्मुद्रणं स्वायत्तम् )

( कर्तृस्थलं गुरु महल अमृतसर

वा श्रीरघुनाथ पाठशाला जम्बू )

( नि० रामप्रपन्नशास्त्री काव्यतीर्थः )